

ஓம் நமோ பகவதே றுபுதேவாய

ॐ नमो भगवते ऋभुदेवाय

ॐ

# अथ ऋभु संहिता ॥

ॐ विश्वकर्मणे नमः ॐ त्वष्ट्राय नमः ॐ ऋभुक्षणाय नमः

## *अथ प्रथमोऽध्यायः ॥*

### अथ अनुवाकः १ ॥ अथ एकदशार्भवं ॥ १ ॥

**॥ ऋषिः मेधातिथिः काण्वः छन्दः गायत्रीः देवता ऋभवः ॥**

अयं देवाय जन्मने स्तोमो विप्रेभिरासया ।
अकारि रत्नधातमः ॥ १ ॥
य इन्द्राय वचोयुजा ततक्षु र्मनसा हरी ।
शमीभिर्यज्ञमाशत ॥ २ ॥
तक्षन्नासत्याभ्यां परिज्मानं सुखं रथं- ।
तक्षन्धेनुं सबर्दुघाम् ॥ ३ ॥
युवाना पितरा पनुः सत्यम-न्त्रा ऋजूयवः ।
ऋभवो विष्ट्यक्रत ॥ ४ ॥
सं वो मदासो अग्मतेन्द्रे-ण च मरुत्वता ।
आदित्येभिश्च राजभिः ॥ ५ ॥
उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ।
अकर्त चतुरः पनुः ॥ ६ ॥
ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ।
एकमेकं सशुस्तिभिः ॥ ७ ॥
अधारयन्त वह्वयोऽभजन्त सुकृत्यया ।
भागं देवेषु यज्ञियं- ॥ ८ ॥

**अथ अनुवाकः २॥ ऋभु सूक्तः॥ २॥**

**॥ ऋषिः कुत्सः अंगिरसः छन्दः जगतीः ५:९ः त्रिष्टुप् देवता ऋभवः॥**

ततं मे अपस्तदु तायते पनुः स्वादिष्ठा धीतिरुचथाय शस्यते।
अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः॥ १॥
आभोगयं प्र यदिच्छन्त एतेनापाकाः प्राञ्चो मम के चिदापयः ।
सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहं॥ २॥
तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रुचफद्भवयन्त ऐतन ।
त्यं चिच्चमस मसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम्॥ ३॥
विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृत त्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः सवंत्सरे समपृच्यन्त धीतिभिः॥ ४॥
क्षत्रे-मिव वि ममुस्तेजनेनँ एकं पात्र-मृभवो जेहमानम्।
उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः॥ ५॥
आ मनीषामन्त रिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना।
तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः॥ ६॥
ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजे-भि र्वसुभिर्वसुर्ददिः।
युष्माकं- देवा अवसाहनि प्रिये ३ऽभि तिष्ठेम पृत्सुतीर सुन्वताम्॥ ७॥
निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः।
सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन॥ ८॥
वाजेभिर्नो वाजसातावविड्ढ्यृभुमाँ इन्द्र चित्रमा दर्षि राधः।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ९॥ **मन्त्रसंख्या १७**

**अथ अनुवाकः ३॥ ऋभु सूक्तः॥ ३॥**

**॥ ऋषिः कुत्सः अंगिरसः छन्दः जगतीः ५ः त्रिष्टुप् देवता ऋभवः॥**

तक्षन्रथं- सुवृतं- विद्मनापसस्तक्षन्हरी इन्द्रवाहा वृषण्वसू।
तक्षन्पितृभ्यामृभवो युवद्वयस्तक्षन्वत्साय मातरं- सचाभुवम्-॥ १॥
आ नो यज्ञाय तक्षत ऋभुमद्वयः क्रत्वे दक्षाय सुप्रजावतीमिषम्।

यथा क्षयाम सर्ववीरया विशा तन्नः शर्धाय धासथा स्विन्द्रियम् ॥ २ ॥

आ तक्षत सातिमस्मभ्यमृभवः सातिं रथाय सातिमर्वते- नरः ।

सातिं नो जैत्रीं सं महेत विश्वहा जामिमजामिं पृतनासु सक्षणिम् ॥ ३ ॥

ऋभुक्षणमिन्द्रमा हुव ऊतय ऋभून्वाजान्मरुतः सोमपीतये ।

उभा मित्रावरुणा नूनमश्विना ते नो हिन्वन्तु सातये-धिये जिषे ॥ ४ ॥

ऋभुर्राय सं शिशातु सातिं समर्यजिद्वाजो अस्माँ अविष्टु ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५ ॥ **मन्त्रसंख्या २२**

**अथ अनुवाकः ४ ॥ ऋभु सूक्तः ॥ ४ ॥**

**॥ ऋषिः दीर्घतमः उचथ्यः छन्दः जगतीः १४ त्रिष्टुप् देवता ऋभवः ॥**

किमु श्रेष्ठः किं यविष्ठो न आजगन्किमीयते दूत्यं १ कद्यदूचिम ।

न निन्दिम चमसं यो **महाकुलो** ऽग्ने-भ्रातर्द्रुण इद्भूतिमूदिम ॥ १ ॥

एकं- चमसं चतुरः कृणोतन तद्वो देवा अब्रुवन्तद्व आगमम् ।

सौधन्वना यद्येवा करिष्यथ साकं देवैर्यज्ञियासो भविष्यथ ॥ २ ॥

अग्निं दूतं प्रति यदब्रवीतनाश्वः कर्त्वो रथ उतेह कर्त्वः ।

धेनुः कर्त्वा युवशा कर्त्वा द्वा तानि भ्रातरनु वः कृत्व्येमसि ॥ ३ ॥

चकृवांस ऋभवस्तद पृच्छत क्वेदभूद्यः स्य दूतो न आजगन् ।

यदावाख्य-च्चमसाञ्चतुरः कृतानादित्त्वष्टा ग्नास्वन्तन्र्यानजे ॥ ४ ॥

हनामैनाँ इति त्वष्टा यदब्रवीच्चमसं ये दे-वपानमनिन्दिषुः ।

अन्या नामानि कृण्वते सुते सचाँ अन्यैरे-नान्कन्या ३ नामभि स्परत् ॥ ५ ॥

इन्द्रो हरी युयुजे अश्विना रथं बृहस्पति -र्विश्वरू-पामुपाजत ।

ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं- भागमै-तन ॥ ६ ॥

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।

सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमपु देवाँ अयातन ॥ ७ ॥

इदमुदकं पिबतेत्य ब्रवीतनेदं वा घा पिबता मुञ्जनेजनम् ।

सौधन्वना यदि तन्नेव हर्यथ तृतीये-घा सवने मादयाध्वै ॥ ८ ॥

आपो भूयिष्ठा इत्येको अब्रवीदग्नि र्भूयिष्ठ इत्यन्यो अब्रवीत्।
वधर्यन्तीं बहुभ्यः प्रैको अब्रवीदृता वदन्तश्चमसाँ अपिंशत ॥ ९ ॥
श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतम्।
आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥ १० ॥
उद्वत्स्वस्मा अकृणोतना तृणं- निवत्स्वपः स्वपस्यया नरः।
अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥ ११ ॥
सम्मील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः।
अशपत यः करस्नं- व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥ १२ ॥
सषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत्।
श्वानं- बस्तो बोधयि तारमब्रवीत्सवंत्सर इदमद्या व्य-ख्यत ॥ १३ ॥
दिवा यान्ति मरुतो भूम्याग्निरयं वातो अनतरिक्षेण याति।
अद्भिर्याति वरुणः समुद्रैर्युष्माँ इच्छन्तः शवसो नपातः ॥ १४ ॥ **मन्त्रसंख्या ३६**

## अथ अनुवाकः ५ ॥ ऋभु सूक्तः ॥ ५ ॥

### ॥ ऋषिः विश्वामित्रः गाथिनः छन्दः जगतीः देवता ऋभवः ॥

इहेह वो मनसा बन्धुता नर उशिजो जग्मुरभि तानि वेदसा।
याभिर्मायाभिः प्रतिजूतिवपर्सः सौधन्वना यज्ञियं- भागमानश ॥ १ ॥
याभिः शचीभिश्चमसाँ अपिं शत यया धिया गामरिणीत चर्मणः।
यने हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २ ॥
इन्द्रस्य सख्यमृभवः समान शुर्मनोर्नपातो अपसो दधन्विरे।
सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥ ३ ॥
इन्द्रे-ण याथ सरथं- सुते सचाँ अथो वशानां भवथा सह श्रिया।
न वः प्रतिमै सुकृतानि वाघतः सौधन्वना ऋभवो वीर्याणि च ॥ ४ ॥
इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ ५ ॥
इन्द्र ऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्सवने शाच्या पुरुष्टुत।

इमानि तुभ्यं स्वसराणि येमिरे **व्रता देवानां** मनुषश्च धर्मभिः ॥ ६ ॥
इन्द्र ऋभुभिवाजिभिर्वाजयन्निह स्तोमं- जरितुरुप याहि यज्ञियम् ।
शतं केते-भिरिषिरेभि रायवे- सहस्रणीथो अध्वरस्य होमनि ॥ ७ ॥ **मन्त्रसंख्या ४३**

*अथ द्वितीयोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऋभु सूक्तः ॥ ६ ॥**

**॥ ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् देवता ऋभवः ॥**

प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धनेुमीळे- ।
ये वातजतूास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥
यदारमक्र-न्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।
आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमव हन्मनायै- ॥ २ ॥
पुनर्ये चक्रुः पितरा युवाना सना यूपे-व जरणा शयाना ।
ते **वाजो विभ्वाँ ऋभुरिन्द्रवन्तो** मधुप्सरसो नोऽवन्तु यज्ञम् ॥ ३ ॥
यत्सवंत्समृभवो गामरक्षन्यत्सवंत्स-मृभवो मा अपिं-शन् ।
यत्सवंत्समभरन्भासो अस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥ ४ ॥
**ज्येष्ठ आह चमसा द्वा करेति कनीया न्त्रीन्कृणवामेत्याह ।**
**कनिष्ठ आह चतुरस्करेति** त्वष्ट ऋभवस्तत्पन यद्वचो वः ॥ ५ ॥
सत्यमू-चुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानाँश्चमसाँ अहेवावे-न त्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥
द्वादश द्यून्यद गोह्यस्यातिथ्ये रण-न्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥
रथं ये चक्रुः सुवृतं- नरेष्ठां ये धेनुं विश्वजवुं- विश्वरू-पाम् ।
त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः ॥ ८ ॥
अपो ह्ये-षामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः ।
**वाजो देवानामभवत्सुकर्मेन्द्र-स्य ऋभुक्षा वरुणस्य विभ्वा** ॥ ९ ॥
ये हरी मेधयोक्था मदन्त इन्द्राय चक्रुः सुयुजा ये अश्वा ।

ते रायस्पोषं द्रविणान्यस्मे धत्त ऋभवः क्षेमयन्तो न मित्रं ॥ १० ॥

इदाह्नः पीतिमुत वो मदं- धुर्न ऋते श्रान्तस्य सख्याय देवाः ।

ते नूनमस्मे ऋभवो वसूनि तृतीये- अस्मिन्सवने दधात ॥ ११ ॥ **मन्त्रसंख्या ५४**

**अथ अनुवाकः २ ॥ ऋभु सूक्तः ॥ ७ ॥**

**॥ ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् देवता ऋभवः ॥**

ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।

इदा हि वो धिषण देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥ १ ॥

विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वम् ।

सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥ २ ॥

अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।

प्र वोऽच्छा जुजुषाणासो अस्थुरभू-त विश्वे- अग्रियाते वाजाः ॥ ३ ॥

अभू-दु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।

पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४ ॥

आ वाजा यातोप न ऋभुक्षा **महो नरो** द्रविणसो गृणानाः ।

आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं- नवस्व इव ग्मन् ॥ ५ ॥

आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः ।

सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इन्द्रवन्तः ॥ ६ ॥

सजोषा इन्द्र वरुणेन सोमं- सजोषाः पाहि गिर्वणो मरुद्भिः ।

अग्रेपाभि र्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥ ७ ॥

सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः ।

सजोषसो दैव्ये-ना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥ ८ ॥

ये अश्विना ये पितरा य ऊती धेनुं ततक्ष र्ऋभवो ये अश्वा ।

ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥ ९ ॥

ये गोमन्तं वाजवन्तं सुवीरं-रयिं धत्थ वसुमन्तं पुरुक्षुम् ।

ते अग्रेपा ऋभवो मन्दसाना अस्मे धत्त ये च रातिं गृणन्ति ॥ १० ॥

नापाभूत न वोऽतीतृषामानिः शस्ता ऋभवो यज्ञे अस्मिन् ।
समिन्द्रे-ण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥ ११ ॥ **मन्त्रसंख्या ६५**

**अथ अनुवाकः ३ ॥ ऋभु सूक्तः ॥ ८ ॥**

**॥ ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् देवता ऋभवः ॥**

इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत ।
अस्मिन्हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः ॥ १ ॥
आग-न्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः ।
सुकृत्यया यत्स्वपस्यया चँ एकं- वचक्र चमसं चतुधा ॥ २ ॥
व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्य ब्रवीत ।
अथै-त वाजा अमृतस्य पन्थां **गणं देवानामृभवः सुहस्ताः** ॥ ३ ॥
किम्मयः स्विच्चमस एष आस यं काव्ये न चतुरो विचक्र ।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥ ४ ॥
शच्याकर्त पितरा युवाना शच्याकर्त चमसं दे-वपानम्- ।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥ ५ ॥
यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय ।
तस्मै-रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानाः ॥ ६ ॥
प्रातः सुतमपिबो हर्यश्व माध्यं-दिनं सवनं केवलं ते ।
समृभुभिः पिबस्व रत्नधेभिः सँ ख्यिँ इन्द्र चकृषे सुकृत्या ॥ ७ ॥
ये देवासो अभवता सुकृत्या श्येना इवेदधि दिवि निषेद ।
ते रत्नं-धात शवसो नपातः सौधन्वना अभव तामृतासः ॥ ८ ॥
यत्तृतीयं सवन रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।
तदृभवः परिषिक्तं व एतत्सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥ ९ ॥

**मन्त्रसंख्या ७४**

**अथ अनुवाकः ४ ॥ ऋभु सूक्तः ॥ ९ ॥**

**॥ ऋषिः वामदेवः गौतमः छन्दः जगतीः ९ः त्रिष्टुप् देवता ऋभवः ॥**

अनश्वो जातो अनभीशुरुक्थ्यो ३ रथस्त्रिचक्रः परि वर्तते रजः ।
महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥ १ ॥
रथं ये चक्रुः सुवृतं- सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।
ताँ ऊ न्व १ स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥ २ ॥
तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम् ।
जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥ ३ ॥
एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।
अथा देवेष्व-मृतत्व मानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यम् ॥ ४ ॥
ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः ।
विभ्वतष्टो विदथे-षु प्रवाच्यो यं दे-वासोऽवथा स विचर्षाणिः ॥ ५ ॥
स वाज्यर्वा स ऋषिवर्चस्यया स शूरो अस्ता पृतनासु दुष्टरः ।
स रायस्पोषं स सुवीर्य- दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥ ६ ॥
श्रेष्ठं-वः पेशो अधि धायि दर्शतं स्तामो वाजा ऋभवस्तं जुजुष्टन ।
धीरासो हि ष्ठा कव यो विपश्चितस्तान्व एना ब्रह्मणा वे-दयामसि ॥ ७ ॥
यूयमस्मभ्यं- धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणिभोजना ।
द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥ ८ ॥
इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः ।
यने- वयं चितयेमात्यन्यान्तं वाजं- **चित्रमृभवो** ददा नः ॥ ९ ॥ **मन्त्रसंख्या ८३**

**अथ अनुवाकः ५ ॥ ऋभु सूक्तः ॥ १० ॥**

**॥ ऋषिः वामदेवः गौतमः छन्दः त्रिष्टुप् ५ः८ अनुष्टुप् देवता ऋभवः ॥**

उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानै-ः ।
यथा यज्ञं मनुषो विक्ष्वा ३ सु दधिध्वे रण्वाः सुदिनेष्वह्नाम् ॥ १ ॥
ते वो हृदे मनसे सन्तु यज्ञा जुष्टासो अद्य घृतनिर्णिजोगुः ।

प्र वः सुतासो हरयन्त पूर्णाः क्रत्वे दक्षाय हर्षयन्त पीताः ॥ २ ॥
त्र्युदायं देवहितं- यथा व स्तोमो वाजा ऋभुक्षणो ददे वः ।
जुह्वे मनुष्वदु परासु विक्षु युष्मे सचा बृहद्दिवेषु सोमं- ॥ ३ ॥
पीवो अश्वाः शुचद्रथा हि भूतायः शिप्रा वाजिनः सुनिष्काः ।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥ ४ ॥
ऋभुमृभुक्षुणो रयिं वाजे- वाजिन्तमं युजम् ।
इन्द्रस्वन्तं हवामहे सदासातममश्विनम् ॥ ५ ॥
सेदृभवो यमवथ यूयमिन्द्र-श्च मर्त्यम् ।
स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥ ६ ॥
वि नो वाजा ऋभुक्षणः पथश्चितन यष्टवे ।
अस्मभ्यं- सूरय स्तुता विश्वा आशास्तरीषणि ॥ ७ ॥
तं नो वाजा ऋभुक्षण इन्द्र नासत्या रयिम् ।
समश्वं- चर्षणिभ्य आ पुरु शस्त मघत्तये ॥ ८ ॥ **मन्त्रसंख्या ९१**

*अथ तृतीयोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऋभु सूक्तः ॥ ११ ॥**

**॥ ऋषिः वसिष्ठः मैत्रावारुणीः छन्दः त्रिष्टुप् देवता ऋभवः ॥**

ऋभुक्षणो वाजा मादयध्वमस्मे नरो मघवानः सुतस्य ।
आ वोऽर्वाचः क्रतवो न यातां विभ्वो रथं नर्य-वर्तयन्तु ॥ १ ॥
ऋभु र्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रे-ण युजा तरुषेम वृत्रम् ॥ २ ॥
ते चिद्धि पूर्वीरभि सन्ति शासा विश्वाँ अर्य उपरताति वन्वन् ।
इन्द्रो विभ्वाँ ऋभुक्षा वाजो अर्यः शत्रोर्मिथत्या कृणवन्वि नृम्णम् ॥ ३ ॥
नू दे-वासो वरिवः कर्तना नो भूत नो विश्वेऽवसे सजोषाः ।
समस्मे इषं वसवो ददीरन्यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम्॥ ५॥
यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तम्।
सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम्॥ ६॥
उवोचिथ हि मघवन्देष्णं **महो अर्भस्य** वसुनो विभागे।
उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या॥ ७॥
त्वमिन्द्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा।
वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः॥ ८॥ **मन्त्रसंख्या ९९**

## अथ अनुवाकः २॥ सवनदेवता सूक्तः॥ १२॥

**॥ ऋषिः विश्वामित्रः छन्दः गायत्रीः त्रिष्टुप् जगतीः देवता अग्निश्च इन्द्रश्च ऋभुवश्च॥**

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्।
इन्द्र प्रातर्जुषस्व नः॥ १॥
माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम्।
प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे-॥ २॥
तृतीये- धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः।
ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः॥ ३॥ **मन्त्रसंख्या १०२**

## अथ अनुवाकः ३॥ सवनदेवता सूक्तः॥ १३॥

**॥ ऋषिः विश्वामित्रः छन्दः गायत्रीः त्रिष्टुप् जगतीः देवता अग्निश्च इन्द्रश्च ऋभुवश्च॥**

अग्ने- जुषस्व नो हविः पुरोळाशं- जातवेदः।
प्रातः सावे धियावसा॥ १॥
माध्यंदिने सवने जातवदेः पुरोळाशमिह कवे जुषस्व।
अग्ने- यह्वस्य तव भागधेयं न प्र मिनन्ति विदथे-षु धीराः॥ २॥
अग्ने- तृतीये सवने हि कानिषः पुरोळाशं- सहसः सूनवाहुतम्।
अथा देवेष्व-ध्वरं विपन्यया धा रत्नवन्तममृते-षु जागृविम्॥ ३॥ **मन्त्रसंख्या १०५**

**अथ अनुवाकः ४ ॥ सवनपवमान सूक्तः ॥ १४ ॥**

**॥ ऋषिः विश्वामित्रः गाथिनः छन्दः उष्णीक् देवता अग्निश्च इन्द्रश्च ऋभुवश्च ॥**

श्येनोऽसि पत्वा गायत्रच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय । यास्य यज्ञस्योदृचं ॥ १ ॥
सुपर्णोऽसि पत्वा त्रिष्टुप् छन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय । यास्य यज्ञस्योदृचं ॥ २ ॥
सखाऽसि पत्वा जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय । यास्य यज्ञस्योदृचं ॥ ३ ॥ **मन्त्रसंख्या १०८**

**अथ अनुवाकः ५ ॥ आर्भवपवमान सूक्तः ॥ १५ ॥**

**॥ ऋषिः विश्वामित्रः छन्दः अनुष्टुभंपुरीषपदानिः उष्णिक् देवता आर्भवपवमानः ॥**

ऋभवो देवाः सोमस्य मत्सन् । विष्ट्वी स्वपसः । कर्मणा सुहस्ताः ॥ १ ॥
धान्या धनिष्ठा । शम्या शमिष्ठाः । शच्या शचिष्ठाः ॥ २ ॥
ये धेनुं विश्वजुवं विश्वरू-पामतक्षन् । अवक्षन् धेनुमभवद् विश्वरू-पी ॥ ३ ॥
अबुध्रन्सं कनीना मदन्तः । अयुंजत हती अयुर्देवाँ उप ॥ ४ ॥
संवत्सरे स्वपसो यज्ञियं भागमायन् । ऋभवो देवा इह श्रवन् । इह सोमस्य मत्सन् ॥ ५ ॥
प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रं । प्रेमं सुन्वन्तं यजमानमवन्तु ॥ ६ ॥
चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमन् ॥ ७ ॥ **मन्त्रसंख्या ११५**

*अथ चतुर्थोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ आर्भव प्रैषाः ॥ १६ ॥**

**॥ ऋषिः वामवेदः गोतमः छन्दः अतिभूरिक्जगतीः देवता ऋभवः ॥**

होता यक्षदिन्द्रं- तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः । समस्य मदा प्रातस्तनाग्मत सम्माध्यन्दिनास्समिदातनास्तेषां समुक्षितानां गौर इव प्रगाह्या वृषायस्वायूया बाहुभ्यामुप याहि हरिभ्यां प्रप्रुथ्या शिप्रे निष्पृथ्य ऋजीषिन्निमे अस्मे आशीर्वन्त प्रस्थिता इन्द्राय सोमस्तां जुषतां व्वेतु पिबतु सोमं होतर्यज ॥ १ ॥ **मन्त्रसंख्या ११६**

**अथ अनुवाकः २ ॥ सूनु सूक्तः ॥ १७ ॥**

**॥ ऋषिः सूनुः ऋभुः छन्दः अनुष्टुप् गायत्रीः २ देवता ऋभवाग्निः ॥**

प्र सूनव ऋभूणाꣳ बृहन्नवन्त वृजना ।
क्षामा ये विश्वधायसो ऽश्नन्धेनुं न मातरं- ॥ १ ॥
प्र देवं देव्या धिया भरता जातवे-दसदं ।
हव्या नो वक्षदानुषक् ॥ २ ॥
अयमु ष्य प्र दे-वयुर्होता यज्ञाय नीयते ।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥ ३ ॥
अयमग्निरुरुष्यत्य मृतादिव जन्मनः ।
स्हसश्चित्सहीयान्देवो जीवातवे कृतः ॥ ४ ॥ **मन्त्रसंख्या १२०**

**अथ अनुवाकः ३ ॥ आर्भवदेवता ब्राह्मणं ॥ १८ ॥**

आभर्व शंसति ॥ १ ॥

ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयंस्तेभ्यः प्रातः सवनेऽवाचिकल्पयिषंस्तानग्निर्वसुभिः प्रातः सवनादनुदत तेभ्यो माध्यन्दिने सवने ऽवाचिकल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यन्दिनात् स्वनादनुदत तेभ्यस्तृतीय सवने ऽवाचिकल्पयिषंस्तान् विश्वेदेवा अनोनुद्यन्त नेह पास्यन्ति नेहेति स प्रजापतिरब्रवीत् सवितारं तववा इमे ऽन्तेवासास्त्वमेवैभिः संपिबस्वेति स तथेत्यब्रवीत् सविता तान्वै त्वमुभयतः परिपिबेति तान् प्रजापतिरुभयतः पर्य पिबत् ॥ २ ॥
ते एतेधाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं **सुरुपकृत्नुमूपयेऽयं वेनश्चोदयत् पृश्निगर्भा** इति प्रजापतिरेवैनांस्तदुभयतः परिपिबति तस्मादु श्रेष्ठी पात्रेरोचयत्येव यं कामयते तं ॥ ३ ॥
तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्त एतेधाय्ये अन्तरदधत येभ्यो माते वा पित्र इति ॥ ४ ॥
**ब्राह्मणसंख्या ४**

**अथ अनुवाकः ४ ॥ अथ आर्भवपवमान ब्राह्मणं ॥ १९ ॥**

**इहोप यात शवसो नपात** इति तृतीयसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति ॥ १ ॥
तदाहुर्यननार्भवीषुस्तुवतेऽथ कस्माद् आर्भवः पवमान इत्याचक्षत इति ॥ २ ॥

**प्रजापति वैं पित ऋभून्** मर्त्यान् स्तोऽमर्त्यान् कृत्वा तृतीयसवन आभजत्तस्मान्नार्भवीषु स्तुवतेऽथ अर्भवः पवमान इत्याचक्षते ॥ ३ ॥

अथाऽऽह यद्यथाछन्दं पूर्वयोः सवनयोरन्वाह गायत्रीः प्रात सवने त्रिष्टुभो माध्यन्दिनेऽथ कस्माज्जागते सति तृतीयसवने त्रिषटुभो ऽन्वाहेति ॥ ४ ॥

धीतरसं वै तृतीयसवनमथैतदधीतरसं शुक्रियं छन्दो यत् त्रिष्टुप् सवनस्य सरसताया इति ब्रूयादथो इन्द्रं एवैतत् स्वनेऽन्वाभजति इति ॥ ५ ॥

**ब्राह्मणसंख्या ९**

**अथ अनुवाकः ५ ॥ वैश्वदेवशास्त्र ब्राह्मणं ॥ २० ॥**

**इहेह वो मनसा बन्धुता नर** इत्यार्भवं ।

यद्वा एति च प्रेति च तत् प्रथमस्याह्नो रूपं ॥ १ ॥

**तक्षन्रथं सुवृतं विद्मनापस** इत्यार्भवं ।

**तक्षन्हरि इन्द्रवाहा वृषण्वसू** इति वृषण्वतद् द्वितीययेऽहनि द्वितीयस्याह्नो रूपं ॥ २ ॥

**अश्वो जातो अनभीशुरुक्थ्य** इत्यार्भवं ।

**रथस्त्रिचक्र** इति त्रिवत्तृतीयेभहनि तृतीयस्याह्नो रूपं ॥ ३ ॥

**प्र ऋभुभ्यो ओ दूतमिव वाचमिष्य** इत्यार्भवं ।

**प्रेति च वाचमिष्य** इति च चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ॥ ४ ॥

**ऋभुर्विभ्वा वाज इन्द्रो नो अछे**त्यार्भवं ।

वाजो वै पशवः पशुरूपं पंचमेऽहनि पंचमस्याह्नो रूपं ॥ ५ ॥

**किमु श्रेष्ठः किं यविष्ठो न आजगन्नुप नो वाजा अध्वयमृभुक्षा** इत्यार्भवं ।

नाराशँसं त्रिवत् षष्ठेऽहनि षष्ठस्याह्नो रूपं ॥ ६ ॥

**अयं देवाय जन्मन** इत्यार्भवं ।

जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपं ॥ ७ ॥

**युवाना पितरा पुन**रित्यार्भवं ।

पुनर्वदष्टमेऽहनि अष्टमस्याह्नो रूपं ॥ ८ ॥

**इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तने**त्यार्भवं ।

**त्रिरा साप्तानि सुन्वत** इति त्रिवन्नवमेऽहनि नवमस्याह्नो रूपं ॥ ९ ॥ **ब्राह्मणसंख्या १८**

*अथ पंचमोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ यजुर्वेदीय ऋभु सूक्तः ॥ २१ ॥**

**॥ ऋषिः वसिष्ठः १ वामदेवः २-३ स्वस्तिः ४ छन्दः त्रिष्टुप् गायत्रिः ४ देवता ऋभवः ॥**

ऋभु र्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रे-ण युजा तरुषेम वृत्रम् ॥ १ ॥
शच्याकर्त पितरा युवाना शच्याकर्त चमसं दे-वपानं- ।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥ २ ॥
ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।
इदा हि वो धिषण देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥ ३ ॥
तं नेमिं ऋभवो यथा नमस्व सहूतिभिः ।
नेदीयो यज्ञमङ्गिरः ॥ ४ ॥ **मन्त्रसंख्या १२४**

**अथ अनुवाकः २ ॥ ऋतु सूक्तः ॥ २२ ॥**

**॥ ऋषिः स्वस्तिः आत्रेयः छन्दः अनुष्टुप् देवता ऋतवः ॥**

वसन्तेन ऋतुना देवा वसवस्त्रिवृता स्तुताः ।
रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥ १ ॥
ग्रीष्मेण ऋतुना देवा रुद्राः पं-चदशो स्तुताः ।
बृहता यशसा बल-ं हविरिन्द्रे वयो दधुः ॥ २ ॥
वर्षाभि- र्ऋतुनादित्या स्तोमे- सप्तदशे स्तुताः ।
वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥ ३ ॥
शारदेन ऋतुना देवा एकविंश **ऋभव** स्तुताः ।
वैराजेन श्रिया श्रियं हविरिन्द्रे वयो दधुः ॥ ४ ॥
हेमन्तेनऽऋतुना देवास्त्रिणवे मरुत स्तुताः ।
बलेन शक्वरीः सहो हविरिन्द्रे वयो दधुः ॥ ५ ॥
शैशिरेणऽऋतुना देवास्त्रयत्रिंशेमृता स्तुताः ।
सत्येन रेवतीः क्षत्रः हविरिन्द्रे वयो दधुः ॥ ६ ॥ **मन्त्रसंख्या १३०**

**अथ अनुवाकः ३ ॥ सवनदेवता सूक्तः ॥ २३ ॥**

**॥ ऋषिः प्रचेतः आङ्गिरसः छन्दः त्रिष्टुप् देवता अग्निः१ विश्वेदेवः२ सुधन्वनः ३ ॥**

अग्निः प्रातस्सवने पात्वस्मान् वैश्वानरो विश्वकृद् विश्वशम्भूः ।
स नः पावको द्रविणं दधात्वायुष्मन्तस्सहभक्षास्स्याम ॥ १ ॥
विश्वे-देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जुह्युः ।
सुमे-धसः प्रियमे-षां वदन्तो वयं स्याम पतयो रयीणां ॥ २ ॥
इदं तृतीयसवनं कवीनामृतेन ये चमसमैरयन्त ।
सौधन्वना अमृतमानशानास्स्विष्टिं नोऽभि वस्यो नयन्तु ॥ ३ ॥ **मन्त्रसंख्या १३३**

**अथ अनुवाकः ४ ॥ सवनपवमान सूक्तः ॥ २४ ॥**

**॥ ऋषिः प्रजापतिः छन्दः उष्णिक् देवता अग्निश्च इन्द्रश्च ऋभुवश्च ॥**

श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ १ ॥
सुपर्णोऽसि त्रिष्टुप् छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ २ ॥
ऋभुरसि जगतीच्छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ ३ ॥ **मन्त्रसंख्या १३६**

**अथ अनुवाकः ५ ॥ अन्न सूक्तः ॥ २५ ॥**

**॥ ऋषिः आत्मा ऋभवः छन्दः त्रिष्टुप् देवता अन्नः ॥**

अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो अमृतस्य नाभिः ।
यो मा ददाति स इदेव मावाः । अहमन्नमन्नमदंतमद्मि ॥ १ ॥
पूर्वमग्नेरपिदहत्यन्नं । यत्तौहासाते अहमुत्तरेषु ।
व्यात्तमस्य पशवस्सुजंभं । पश्यन्ति धीराः प्रचरन्ति पाकाः ॥ २ ॥
जहाम्यन्यं न जहाम्यन्यं । अहमन्नं वशमिच्चरामि ।
समानमर्थं पर्येमि भुंजत् । कोमामन्नं म्नुष्यो दयेत ॥ ३ ॥
पराके अन्नं निहितं लोक एतत् । विश्वै देवैः पितृभिर्गुप्तमन्नं ।
यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव ॥ ४ ॥
महांतौ चरूसकृदुग्धेन पप्रौ । दिवं च पृश्नि पृथिवीं च साकं ।

तथ्सं पिबंतो न मिनंति वेधसः। नैतद्भूयो भवति नो कनीयः॥ ५॥

अन्नं प्राणमन्नमपानमाहुः। अन्नं मृत्युं तमुजीवातु माहुः।

अन्नं ब्रह्माणो जरसं वदन्ति। अन्नमाहुः प्रजननं प्रजानां॥ ६॥

मोघमन्नं विदते अप्रचेताः। सत्यं ब्रवीमि वध इथ्स तस्य।

नार्यमणं पुष्यति नो सखायं। केवलाघो भवति केवलादी॥ ७॥

अहं मेघस्स्तनयन्वर्षन्नस्मि। मामदन्त्यहमद्म्यन्यान्।

अह॒ सदमृतो भवाति। मदादित्या अधि सर्वे तपंति॥ ८॥ **मन्त्रसंख्या १४४**

## *अथ षष्ठोऽध्यायः॥*

### अथ अनुवाकः १॥ ऋभूणाँ भागोसिः ब्राह्मणं॥ २६॥

**ऋभूणाँ भागोऽसि। विश्वेषां देवानामाधिपत्यं** इति।

ऋभुभ्यो भागं कृत्वा विश्वेभ्यो देवेभ्य आधिपत्यमकरोत्।

**भूतं स्पृतं त्रयस्त्रि॒शः स्तोम** इति।

सर्वाणि भूतानि त्रयस्त्रि॒शेन स्तोमेन पाप्मनो मृत्योरस्पृणोत्।

तयैवैतद्यजमानः सर्वाणि भूतानि त्रयस्त्रि॒शेन स्तोमेन पाप्मनो मृत्योः स्पृणोति॥ ५॥

### अथ अनुवाकः २॥ तृतीयसवने आर्भवपवमान ब्राह्मणं॥ २७॥

पुरुषं ह नारायणं **प्रजापतिरुवाच** यजस्वयजस्वति। स होवाच। यजस्वयजस्वेति। वाव त्वं मामात्य। त्रिस्यक्षि। वसवः प्रातः सवनेनामुः। रुद्रा माध्यंदिन सवनेन। आदित्यास्तृतीय सवनेन। अथ मम यज्ञवास्त्वेन। यज्ञवास्तावेवाहमास इति॥ १॥

स होवाच। यजस्वैव। अहं वै ते तद्वक्ष्यामि। यथा त उक्थ्यानि मणिरिव सूत्र ओतानि भविष्यन्ति। सूत्रमिव वा मणाविति॥ २॥

तस्मा उ हैतदुवाच। प्रातः सवने बहिष्पवमान उद्गातारमन्वारभासै। **श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे। स्वस्ति मा सं पारयय** इति॥ ३॥

अथ माध्यन्दिने पवमाने उद्गातारमन्वारभासै। **सुपर्णोऽसि त्रिष्टुप् छन्दा अनु त्वा रभे। स्वस्ति मा सं पारयय** इति॥ ४॥

अय तृतीयसवन आर्भवे पवमाने। उद्गातारमन्वारभासै। **ऋभुरसि जगतीच्छन्दा अनु त्वा रभे। स्वस्ति मा सं पारयय** इति॥**ब्राह्मणसंख्या २२**

### अथ अनुवाकः ३॥ वैश्वदेवाशास्त्र ब्राह्मणं॥ २८॥

अथातस्तृतीयसवनं। अतिच्छन्दा एव प्रतिपत् वैश्वदेवस्य।

**ऋभुर्विभ्वा वाक इन्द्रो नो अच्छ** इत्यार्भवं शस्त्वा ऐकाहिके निविदं दधाति। इति वैश्वदेवं॥ १॥

### अथ अनुवाकः ४॥ सवित्रे त्वा ऋभु ब्राह्मणं॥ २९॥

**सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा** इति ॥ १॥

अयं वै सविता। योऽयं पवते। तस्मा एवैनं जुहोति।

तस्मादाह **सवित्रे त्वा** इति। **ऋभुमते विभुमते वाजवते** इति।

तदस्मिन् विश्वान्देवान्वाभजति॥ २॥

### अथ अनुवाकः ५॥ भुज्युर्लाह्यायनि ब्राह्मणं॥ ३०॥

अथ हैनं **भुज्युर्लाह्यायनिः** प्रपच्छ। याज्ञवल्क्येति होवाच। मद्रेषु चग्काः पर्यव्रजाम। ते पतंलस्य काप्यस्य गृहानैम। तस्यासीद् छुहिता गन्धर्व गृहीत्वा। तमपृच्छाम। कोऽसीति। सोऽब्रवीत्। **सुधन्वाऽऽङ्गिरस** इति। तं यदा लोकानामंतानपृच्छाम। अथैनमब्रूम। क्व पातिक्षिता अभवन् क्व पारिक्षिता अभवन्निति। तत्त्वा पृच्छामि याज्ञवल्क्य। क्व पारिक्षिता अभवन्निति॥ १॥

स होवाच। उवाच वै स तदगच्छन्वैते तत्र यत्र**ाश्वमेध**याजिनो गच्छन्तीति क्व**न्वश्वमेध**याजिनो गच्छन्तीति द्वात्रिंशतं वै देवरथाह्यान्ययं लोकस्यं समन्तं लोकन् द्विस्तावत् पृथिवी पर्यैति तां पृथिवीं द्विस्तावत् समुद्रः पर्यैति तद्यावती क्षुरस्य धारा बावद्वा सक्षिकायाः पत्रन्तावानन्तरेण आकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्राच्छत्तान्वायुरात्मानि धित्वा तत्रागमयद्यत्र पारिक्षिता अभ वन्नित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्युष्टि वायुः समष्टिरप पुनर्मृत्युंजयति सर्वमायुरेति य एवं वेद ततो ह भुज्यु लीह्यायनिरुपरराम॥ २ ॥

**ब्राह्मणसंख्या २७**

*अथ सप्तमोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ सामवेदीय ऋभु सूक्तः ॥ ३१ ॥**

**ऋषिः श्रुकक्षः आङ्गिरसः छन्द गायत्रीः देवता ऋभवः ॥**

१ २ ३ १ २ ३ १ २ ३ २ ३ २

इन्द्र इषे ददातु न ऋभुक्षणं ऋभुꣳरयिं ।

२ १ २ ३ १ २

वाजी ददातु वाजिनं ॥ १ ॥

**ऋषिः मेधातिथिः काण्वः छन्दः बृहतीः देवता ऋभवः ॥**

३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २

अभि त्वा पूर्वपीतय इन्द्र स्तोमे-भिरायवः ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २

समीचीनास ऋभवः समस्वरन्नुद्रा गृणन्त पूर्व्यं ॥ २ ॥ **मन्त्रसंख्या १४६**

**अथ अनुवाकः २ ॥ सवनपवमान सूक्तः ॥ ३२ ॥**

**॥ ऋषिः प्रचेतः आङ्गिरसः छन्दः उष्णिक् देवता अग्निश्च इन्द्रश्च ऋभुवश्च ॥**

श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ १ ॥

वृषकोऽसि त्रिष्टुप् छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ २ ॥

स्वरोऽसि गयोऽसि जगती छन्दा अनु त्वा रभे । स्वस्ति मा सं पारयय ॥ ३ ॥

**मन्त्रसंख्या १४९**

**अथ अनुवाकः ३ ॥ ऋभु सामगानः ॥ ३३ ॥**

**अथ सौमित्रे द्वे ॥**

**ऋषिः सुमित्रः छन्दः गायत्रीः गानः ग्रामेगेयं देवता ऋभुः ॥**

४ ५ ४र ५ र ४

इन्द्र इषे ददातु नः । ओहाइ ॥

२ १ ३ २ ३ ५ २र र ३ २

**ऋभु** । क्षणाऽ२म् । **ऋभु**१राऽ२३४यीम् । वाजी ददातु वाऽ३ ॥

२र ३

वाजीददा ॥

२ १ ५ ४ ॥५

तुवोऽ२३४वा । जाभ५ इनोऽ६हाइ ॥ १ ॥

५ र र ५

इन्दू इषे ददातु नाऽ६ ए ॥

२ १ २ _ ३ २

**ऋभु**क्षणमृ । भूऽ२१२५म् । रयीऽ३४३म् ॥

_ १ ४ ५ ऽ ४ ॥ ५

ददाऽ२ ओऽ२३ । तुवोवा । जाऽ५ इनोऽ६ हाइ ॥ २ ॥

**मन्त्रसंख्या १५१**

**अथ अनुवाकः ४ ॥ ऋभु सामगानः ॥ ३४ ॥**

**अथ प्रजापतेः वषट्कारणिधनं ॥**

**ऋषिः प्रजापतिः छन्दः बृहतिः गानः ग्रामेगेय ऐन्द्रार्भवः ॥**

४ ३ ४र १३४र ् र ५ २ ४र् ४र ५

अभि त्वा पूर्वपीतये । अभि त्वाऽ३पूर्वपीतयाइ ॥

२ र र १अ _ १ २ १र न २

इन्द्रस्तोमेभिऽ३रायवाऽ२ः । भिरायाऽ१वाऽ२३ः । ओमोऽ३वा ॥

र र र १अ _ १ २ १र न २

समीचीनास **ऋभवः** सऽ३मास्वराऽ२न् । समास्वाऽ१राऽ२३न् । ओमोऽ३वा ॥

४ १अ _ १ २ १र ् ३ ५र र

रुद्रागृणन्तऽ३पूर्वियाऽ२म् । तपूर्वाऽ१याऽ२३म् । ओम् । ओऽ२ । वाऽ२३४ । औहोवा ॥

३ ५

ऊऽ२३४पा ॥ ३ ॥

**मन्त्रसंख्या १५२**

**अथ अनुवाकः ५॥ आर्भवपवमानः॥ ३५॥**

**ऋषिः मधुच्छन्दः वैश्वामित्रः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

स्वादिष्ठया मदिष्ठया पवस्य सोम धारया। इन्द्राय पातवे सुतः॥ १॥

**ऋषिः असितः काश्यपः छन्दः गायत्रीः देवता आर्भव पवमानः॥**

परि प्रिया दिवः कविर्वयाँसि नप्तयोर्हितः। सुवानो याति कविक्रतुः॥ २॥

**ऋषिः असितः काश्यपः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

परि सुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः। मदे-षु सर्वधा असि॥ ३॥

**ऋषिः श्यावाश्वः आत्रेयः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

प्र सोमासो मदच्युतः श्रवसे नो मघोनः। सुता विदथे- अक्रमुः॥ ४॥

**ऋषिः त्रितः आप्त्यः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

तिस्रो वाच उदीरते गावो मिमन्ति धेनवः। हरिरेति कनिक्रदत्॥ ५॥

**ऋषिः अमहीयुः आङ्गिरसः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

यस्ते मदो वरेण्यस्तेना पवस्वान्धसा। देवावीरघशंसहा॥ ६॥

**ऋषिः जमदग्निः भार्गवः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

असाव्यंशुर्मदायाऽप्सु दक्षो गिरिष्ठाः। श्येनो न योनिमासदत्॥ ७॥

**ऋषिः निध्रुवः काश्यपः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

पवस्य देवायुषगिन्द्रं- गच्छतु ते मदः। वायुमा रोह धर्मणा॥ ८॥

**ऋषिः भारद्वजः बार्हस्पत्यः छन्दः गायत्रीः देवता आर्भवपवमानः॥**

त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे। पवस्व मंहयद्रयिः॥ ९॥

**ऋषिः अनानतः पारुच्छेतिः छन्दः अत्यष्टिः देवता आर्भव पवमानः॥**

अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः सूरो न सयुग्वभिः।

धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।

विश्वा यद् रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः॥ १०॥ **मन्त्रसंख्या १६२**

*अथाष्टमोऽध्यायः ॥*

## अथ अनुवाकः १ ॥ आर्भवदेवता ब्राह्मणं ॥ ३६ ॥

**इन्द्रायाहि चित्रभान** वित्यार्भवं इन्द्रं ऋभवो वा ।

इन्द्रस्य प्रियं धाम प्रियेणै वैनं तद्धाम्ना परोक्ष मुय शिक्षति ॥ १ ॥

**ऋषिः मधुच्छन्दः वैश्वामित्रः छन्दः गायत्रीः देवता ऐन्द्रार्भवः ॥**

१ २र ३ २ ३ २ ३ १ २

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।

१ २ ३ १ २ ३ १ २

अण्वीभिस्तना पूतासः ॥ २ ॥ **ब्राह्मणसंख्या २८**

## अथ अनुवाकः २ ॥ आर्भवपवमान ब्राह्मणं ॥ ३७ ॥

**प्र सोमासो मदच्युत** इति गायत्री भवति मदवद्वै रसव तृतीय सवनं मदमेव तद्रसं दधाति ॥ १ ॥

**यस्ते मदो वरेण्य** इति गायत्री भवति मदवद्वै रसव तृतीय सवनं मदमेव तद्रसं दधाति ॥ २ ॥

**तिस्रो वाच उदीग्त** इति तृतीयस्याऽह्नो रूपं तृतीय मह रार भन्ते ॥ ३ ॥

**परि प्रिया दिवः कवि रि**ति परिवत्यो भवन्त्यन्तो वै चतुर्थ मह स्तस्यैताः पर्याप्त्यै ॥ ४ ॥

**असिव्यशु र्म्मदायेति** गायत्री भवति मदवद्वै रसव तृतीय सवनं मदमेव तद्रसं दधाति ॥ ५ ॥

**परि स्वानो गिरिष्ठा** इति परिवत्यो गायत्र्यो भवन्ति सर्वस्य पर्य्याप्त्यै ॥ ६ ॥

**पवस्य देव आयुष गिन्द्रं गच्छतुते मद** इति गायत्री भवति मदवद्वै रसव तृतीय सवनं मदमेव तद्रसं दधाति ॥ ७ ॥

**त्वं सोमासि धारयु** इति गायत्री भवत्यऽह्नोधृत्यै त्वमिति बृहतो रूपं बार्हतं ह्येत दहः ॥ ८ ॥

**स्वादिष्टया मदिष्टये** गायत्री भवति मदवद्वै रसव तृतीय सवनं मदमेव तद्रसं दधाति ॥ ९ ॥

**ब्राह्मणसंख्या ३७**

## अथ अनुवाकः ३ ॥ आर्भवपवमान ब्राह्मणं ॥ ३८ ॥

**अया रुचा हरिण्या पुनान**हत्यार्भवः पवमानः ।

सर्वेषां वा एषा छन्दसाँ रूपं सर्वेष्वेवछन्द स्स्वार्भवं पवमानं प्रतिष्ठापयति ॥ १ ॥

**अथ अनुवाकः ४ ॥ आर्भवहोम ब्राह्मणं ॥ ३९ ॥**

**सदस्सदः प्रजावान् ऋभुजुषाण इन्द्राय देवेभ्यो जुहुता हविः स्वाहा** ॥ १ ॥

**ब्राह्मणसंख्या ३९**

**अथ अनुवाकः ५ ॥ आर्भवपवमान ब्राह्मणं ॥ ४० ॥**

सूर्य्यो युनक्तु वाचा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियँ सत्याः कामा यजमानस्य सन्तु ॥ १ ॥

**स्वारोसि गयोसि जगछन्दा अनु त्वारभे स्वस्ति मा संपारयामा**स्तोत्रस्व स्तोत्रं गंयात् इन्द्रवन्तो वनेमहि भक्षीमहि प्रजाखमषं ॥ २ ॥

इन्द्रविन्द्रपीतस्य त इन्द्रियावतो जगच्छन्दसः सर्वगणस्य सर्वगक्ष उपहूत उपहूतस्य भक्षयामि ॥ ३ ॥

**ब्राह्मणसंख्या ४२**

***अथ नवमोऽध्यायः ॥***

**अथ अनुवाकः १ ॥ अथर्ववेदीय ऋभु सूक्तः ॥ ४१ ॥**

**॥ ऋषिः अथर्वणः १ विश्वामित्रः २ छन्दः जगतीः देवता ऋभवः ॥**

यथाग्ने देवा ऋभवो मनीषिणो अमुं- उन्मत्तं असृजन्नार एनसः ।
एव ते शक्रो अभयं- कृणोतु मुञ्चस् वै-नसो वि नयासि रक्षः ॥ १ ॥
इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ २ ॥ **मन्त्रसंख्या १६४**

**अथ अनुवाकः २ ॥ सवनदेवता सूक्तः ॥ ४२ ॥**

**॥ ऋषिः प्रचेताङ्गिरस यमश्च छन्दः त्रिष्टुप् देवता अग्निः१ विश्वेदेवः२ सुधन्वनः३ ॥**

अग्निः प्रातः सवने पात्वस्मान् वैश्वानरो विश्वकृद् विश्वशम्भूः ।
स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम ॥ १ ॥
विश्वे-देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जुह्युः ।
आयुष्मन्तः प्रियमे-षां वदन्तो वयं देवानाᳫ सुमतौ स्याम ॥ २ ॥
इदं तृतीयᳫ सवनं कवीनामृतेन ये चमसमैरयन्त ।
ते सौधन्वनाः स्व रानशानाः स्वि ष्टिं नो अभि वस्यो नयन्तु ॥ ३ ॥ **मन्त्रसंख्या १६७**

**अथ अनुवाकः ३ ॥ सवनपवमान सूक्तः ॥ ४३ ॥**

**॥ ऋषिः प्रचेताङ्गिरस यमश्च छन्दः उष्णिक् देवता अग्निश्च इन्द्रश्च ऋभुवश्च ॥**

श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ १ ॥
वृषासि त्रिष्टुप् छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ २ ॥
ऋभुरसि जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ३ ॥ **मन्त्रसंख्या १७०**

**अथ अनुवाकः ४ ॥ रोहिणी सूक्तः ॥ ४४ ॥**

**ऋषिः ऋभुः सुधन्वाङ्गिरसः देवता वनस्पतिः**

**छन्दः गायत्रीः अनुष्टुप् २-५ बृहतीः ७ त्रिपदा यवमध्याभुरिग्गायत्रीः ६ ॥**

रोहण्यसि रोहण्यस्थ्नश्छिन्नस्य रोहणी ।
रोहयेदमरुन्धति ॥ १ ॥
यत्ते-रिष्टं यत्ते-द्युत्तमस्ति पेष्ट्रं- त आत्मनि ।
धाता तद्भद्रया पुनः सं दधत् परुषा परुः ॥ २ ॥
सं ते-मज्ज मज्ञा भवतु समु ते परुषा परुः ।
सं ते-माँसस्य विस्रस्तं समस्थ्यपि रोहतु ॥ ३ ॥
मजज मज्ञा सं धीयतां चर्मणां चर्म रोहतु ।
असृक्ते अस्थि रोहतु माँसं माँसेन रोहतु ॥ ४ ॥
लामे लोम्ना सं कल्पया त्वचा सं कल्पया त्वचं- ।
असृक्ते अस्थि रोहतु च्छिन्नं सं धे-ह्योषधे ॥ ५ ॥
स उत्तिष्ठ प्रेहि प्र द्रव रथः सुचक्रः सुपविः सुनाभिः ।
प्रति तिष्ठोर्ध्वः ॥ ६ ॥
यदि कर्तं पतित्वा सम्शश्रे यदि वाश्मा प्रहृतो जघान ।
ऋभू रथस्येवाङ्गानि सं दधत् परुषा परुः ॥ ७ ॥ **मन्त्रसंख्या १७७**

### अथ अनुवाकः ५॥ मधुविद्या सूक्तः॥ ४५॥

**॥ ऋषिः अथर्वाङ्गिरसः छन्दः अनुष्टुप् उष्णिक् ४ बृहतीः ८ पङ्क्तिः १० देवता मधुविद्या॥**

यथा सोमः प्रातस्सवने अश्विनोर्भवति प्रियः।
एवा मे- अश्विना वर्च आत्मनि ध्रियतां॥ १॥
यथा सोमो द्वितीयसवन इन्द्राग्न्योर्भवति प्रियः।
एवा म इन्द्राग्नी वर्च आत्मनि ध्रियतां॥ २॥
यथा सोमस्तृतीये सवन **ऋभूणा॰** भवति प्रियः।
एवा म **ऋभवो** वर्च आत्मनि ध्रियतां॥ ३॥
मधु जनिषीय मधु वँसिषीय।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा॥ ४॥
सं माग्ने वर्चसा सृज सं प्रजया सं आयुषा।
विद्यर्मे- अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः॥ ५॥
यद्गिरिषु पर्वतेषु गोष्वश्वे-षु यन्मधु।
सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि॥ ६॥
यथा मधु मधुकृतः संभरन्ति मधावधि।
एवा मे- अश्विना वर्च आत्मनि ध्रियतां॥ ७॥
यथा मक्षा इदँ मधु न्यञ्जन्ति दक्षिणां अधि।
एवा मे- अश्विना वर्चस्तेजश्च ध्रियतां॥ ८॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती।
यथा वर्चस्वतीं वाचमावदानि जनाँ अनु॥ ९॥
वृषा शुष्मं क्षिपसि भूमयां दिवो मधो कश्या पृथिवीं अनक्षि।
ताँ दारारं पशव उप जीवन्ति सर्वे तेन वो सेषमूर्जं- बिभर्ति॥ १०॥ **मन्त्रसंख्या १८७**

*अथ दशमोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऐन्द्रार्भवब्राह्मणं ॥ ४६ ॥**

तदाहुः यदैन्द्रार्भवं वै तृतीयसवनमथ कस्मादेष एव

तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भवया यजति ? ॥ १ ॥

**इन्द्र ऋभुभिर्वाजवद्भिः समुषितमिति** होतैव ।

नाना देवत्याभिरितरे । कथं तेषामैन्द्रार्भव्यो भवन्ति ? ॥ २ ॥

**इन्द्रावरुणा सुतपाविमं सुतमिति** मैत्रावरुणो यजति ।

**युवो रथो अध्वरं देववीतय** इति बहूनि वाह । तदृभूणां रूपं ॥ ३ ॥

**इन्द्रश्च सामें पिबतं बृहस्पत** इति ब्राह्मणच्छंसी यजति ।

**आ वां विशन्त्विन्दवः स्वाभुवः** इति बहूनि वाह । तदृभूणां रूपं ॥ ४ ॥

**आ वो वहन्तु सप्तयो रघुष्यदः** इति पोता यजति ।

**रघुपत्वानः प्र जिगात बाहुभिः** इति बहूनि वह । तदृभूणां रूपं ॥ ५ ॥

**अमिव नः सुहवा आ हि गन्तन** इति नेष्टा यजति ।

गन्तनेति बहूनि वाह । तदृभूणां रूपं ॥ ६ ॥

**इन्द्राविष्णू पिबतं मध्वो अस्य** इति अच्छावाको यजति ।

**आ वामन्धांसि मदिराण्यमन्** इति बहूनि वाह । तदृभूणां रूपं ॥ ७ ॥

**इमं स्तोममर्हते जातवेदसे** इति अग्नीध्रो यजति ।

**रथमिव सं महेमा मनीषया** इति नहूनि वाह । तदृभूणां रूपं ॥ ८ ॥

एवमु हैता ऐन्द्रार्भव्यो भवन्ति । यद् नाना देवत्याः तेनान्या देवताः प्रीणाति ।

यदु जगति प्रासाहा  जागतमु वै तृतीयसवनं । तृतीयसवनस्य समष्ट्यै ॥ ९ ॥

**ब्राह्मणसंख्या ५१**

**अथ अनुवाकः २ ॥ आर्भवपवमानब्राह्मणं ॥ ४७ ॥**

**स्वरोऽसि गयोऽसि जगच्छन्दा अनु त्वारभे । स्वस्ति मा संपारय** ॥ इति ॥ १ ॥

स यदाह स्वरोऽसीति सोमं वा एतदाह । एष ह सूर्यो भूत्वामुष्मिँल्लोके स्वरति ।

तद्यत् स्वरति तस्मात् स्वरः । तत् स्वरस्य स्वरत्वं ॥ २ ॥

स यदाह गयोऽसीति सामें वा एतदाह । एष ह वै चन्द्रमा भूत्वा सर्वाँल्लोकान् गच्छति ।

तद् यद् गच्छति तस्माद् गयः। तद् गयस्य गयत्वं ॥ ३ ॥

स यदाह जागतेन छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिँल्लोके सूर्यं सन्तमन्वारभते।

स यदाह स्वस्ति मा संपारयेति जागतेनैव छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिँल्लोके सूर्येण देवेन स्वस्ति मा संपारयेति। जागतेनैवैनं तच्छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिँल्लोके सूर्येण देवेन स्वस्ति संपद्यते य एवं वेद ॥ ४ ॥

**ब्राह्मणसंख्या ५५**

**अथ अनुवाकः ३ ॥ ऋभूणाँ भागोऽसिः ॥ ४८ ॥**

**॥ ऋषिः प्रजापतिः साध्यगणश्च छन्दः उष्णिकभुरिकतिघृति देवता ऋभुवः ॥**

ऋभूणां भागोऽसि। विश्वे-षां देवानामाधिपत्यं।

भूतं निशान्तꣳ स्पृतं। त्रयस्त्रिꣳशः स्तोमः ॥ १ ॥

आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्तस

इन्द्रपीतस्य नराशँसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥ २ ॥

**मन्त्रसंख्या १८९**

**अथ अनुवाकः ४ ॥ ऋभु आहुतिः ॥ ४९ ॥**

**॥ ऋषिः दिर्घतमः छन्दः भुरिक्गायत्रीः १ भुरिकतिघृतिः २ देवता ऋभुवः ॥**

सवित्रे त्वा ऋभुमते-विभुमते वाजवते स्वाहा ॥ १ ॥

अश्याम ते देव घर्म ऋभूमतो विभूमतो वाजवमो

बृहस्पतिवतो विश्वदेव्यावतः पितृमतोऽआङ्गिरस्वत

उशीमहि त्वा नमस्ते अस्तु मा मा हिꣳसीः ॥ २ ॥ **मन्त्रसंख्या १९१**

**अथ अनुवाकः ५ ॥ रथकार ब्राह्मणं ॥ ५० ॥**

अथ वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृहे इति ॥ १ ॥

ब्राह्मणाः कियद्यूयं अश्वमेधस्य वित्येति। ते ये न विद्युः। जिनीयात तान्। सर्वं वा अश्वमेधः। सर्वस्यैष न वेद। यो ब्राह्मणः सन्नश्वमेधस्य न वेद। सोऽब्राह्मणः। ज्येय एव सः। पानं करवाय। खदं त्रिवपाथ। अथ यत् किंच जनपदे। अकृतान्नं। सर्वं वस्तत्मुतं। तेषां रथकारकुल एव वो वसतिः। तद्ध्यश्वस्यायतनमिति ॥ २ ॥ **ब्राह्मणसंख्या ५७**

*अथ एकादशोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऋग्वेदीय सूत्रः ॥ ५१ ॥**

**अथ ऋग्वेदे कल्पे ऋषयोवाचः ॥**

प्रत्युक्तो निगदं तास्वध्वर्यवाधावेन्द्राय सोममूर्जजस्वन्तं पयस्वन्तं मधुमन्तं वृष्टिवनिं वसुमते रुद्रवत आदित्यवत **ऋभुमते विभुमते वाजवते** बृहस्पतिमते विश्वदेव्यावते। यस्त पीत्वा मद इन्द्रो वृत्राणि जङ्घनत्। प्रसजन्यानि तारिषः। अम्बय इत्यध्यर्धामनूच्य। उपोत्थाया अध्वर्युमन्वावृत्योत्तरामध्यर्धामनूच्य। उपोत्तमां च सूक्तस्य। उत्तमया परिधाय। पर्यावृत्योपविशति ॥ १ ॥

पशुदेवतामावाह्य वनस्पतिं च। इन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्तमावहेन्द्रं आदित्यवन्तं **ऋभुमन्तं विभुमन्तं वाजवन्तं** बृहस्पतिमन्तं विश्वदेव्यावन्तमावहेति **सवन देवताः** ॥ २ ॥

**सखाऽसि पत्वा जगच्छन्दा अनु त्वा रभे। स्वस्ति मा सं पारय। यास्य यज्ञस्योदृचमिति आर्भवः ॥**

**ॐ असतो मा सद्गमय। तमसो मा ज्योति गमय। अन्तान्मानन्तं गमय। मृत्यो मा अमृतं गमय ॥**

**ॐ शान्तिः शान्तिः शान्तिः ॥**

समान उदर्कः ॥ **उपहूता देवा अस्य सोमस्य पवमानस्य विचक्षणस्य भक्ष उप मां देवा हूतन्तामस्य सोमस्य पवमानस्य विचक्षणसय भक्षे मनसा त्वा भक्षयामि वाचा त्वा भक्षयामि प्राणेन त्वा भक्षयामि चक्षुषा त्वा भक्षयामि श्रोत्रेण त्वा भक्षयामि** इति स्तुते बहिष्पवमाने होता ॥ ३ ॥

आर्भवेण स्तुते पवमानेन मनोतादीलानां पशुकर्म कृत्वातः पुरोलाशैः सवनीयैश्चरन्ति। **तृतीये धानाः सवान** इति पुरोनुवाक्या ॥ **अग्ने तृतीये सवन** स्विष्टकृतः ॥ **इहोप** यातेत्युन्नीयमान सूक्तं ॥ **होता यक्षदिन्द्रं तृतीयस्य सवनस्येति** प्रैषः ॥ **इन्द्र ऋभुभिर्वाजवद्भिरि**ति यजति ॥ **इन्द्रावरुणा सुतपाविति** मैत्रावरुणः ॥ **इन्द्रश्च सोममि**ति ब्राह्मणाच्छंसी ॥ **आ वो वहन्त्वि**ति पोता ॥ **अमेव न** इति नेष्टा ॥ **इन्द्राविष्णू पिबतमि**त्यच्छावाकः ॥ **इमं स्तोममि**त्याग्नीध्रः ॥ ४ ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः जगतीः देवता ऋभवः पौरोहितः होता ॥**

इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ १ ॥

**ऋषिः भरद्वाजः बार्हस्पत्यः छन्दः जगतीः देवता इन्द्रावरुणः पौरोहितः मैत्रावरुणा ॥**

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता।

युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ २ ॥

**ऋषिः वामदेवः गोतमः छन्दः जगतीः देवता इन्द्राबृहस्पतिः पौरोहितः ब्राह्मणाच्छंसी ॥**

इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन्यज्ञे मन्दसाना वृषण्वसू ।

आ वां विशन्त्विन्दव ः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥ ३ ॥

**ऋषिः गोतमः राहूगणः छन्दः जगतीः देवता मरुतः पौरोहितः पोता ॥**

आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।

सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ॥ ४ ॥

**ऋषिः गृत्समदः शौनकः छन्दः जगतीः देवता त्वष्टाः पौरोहितः नेष्टा ॥**

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।

अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्ट-र्देवेभिर्जनिभिः सुमद्गणः ॥ ५ ॥

**ऋषिः भरद्वाजः बार्हस्पत्यः छन्दः जगतीः देवता इन्द्राविष्णुः पौरोहितः अच्छावाकः ॥**

इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।

आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ६ ॥

**ऋषिः कुत्सः आङ्गिरसः छन्दः जगतीः देवता अग्निर्जातवेदाः पौरोहितः अग्नीध्रः ॥**

इमं स्तोममर्हते जातवे-दसे रथमिव सं महेमा मनीषया ।

भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥ **मन्त्रसंख्या १९८**

## अथ अनुवाकः २ ॥ यजुर्वेदीय सूत्रः ॥ ५२ ॥

**अथ यजुर्वेदे कल्पे ऋषयोवाचः ॥**

**ऋभूणा॰ त्वा देवानां व्रतपते व्रतेना दधामि** इति रथकारस्य । यथा देवतमग्निराधीयते ॥ १ ॥

**अक्षिदुः खोत्थितस्यैव । विप्रसन्ने कनीनिके । आंक्त्ते चाद्गणं नास्ति । ऋभूणां तन्निबोधत** ॥ २ ॥

अथ आदित्यस्य अष्ट पुरुषस्य **ऋभूणामादित्यानाँ स्थाने स्वतेजसाभानि** इति ॥ ३ ॥

**ऋभूणा॰ भागो ऽसि** इति पश्चाद्विवर्तोऽष्टाचत्वारिँश इति ॥ ४ ॥

**वसन्ते ब्राह्मणो**ऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्यो **वर्षासु रथकार** इति **सर्वेषां त्वेव वसन्त आधानँ सर्वेषाँ रोहिण्यां** यथा वर्ण त्वेव छन्दाँस्यपि तु नु खलु कामलियुक्तान्यग्न्याधेनानि भवन्ति ।

यथैतद्भवति कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत पुनर्वस्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्च **चित्रायामिति** ॥ ५॥

स एष सप्तदश आर्भवः पवमानो भवति तस्य नवम्यां प्रस्तुतायां वाचयति **श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे। सुपर्णोऽसि त्रिष्टुप् छन्दा अनु त्वा रभे। सघाऽसि जगतीच्छन्दा अनु त्वा रभे। स्वस्त मा सं पारयय** इति॥ ६॥

आर्भवे पवमाने तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति **अग्निः प्रातः सवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः। स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम॥ विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जुह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाँ सुमतौ स्याम॥ इदं तृतीयँ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहा** इति॥ ७॥

त्रिणव आर्भवः पवमान एकविंशँमग्निष्टोम सामसैका जगत्येतानि वै छन्दसामपचिततमान्यपचितिमानेव भवति य एवं देवः॥ ८॥

**आयुषे हिंकुरु तस्मै प्रस्तुहि तस्मै स्तुहि तस्मै मेऽवरुद्धया॥ सँवेशायोपवेशाय जगत्याभि भवे छन्दसे स्वाहा** इति पुरस्तादार्भवस्य पवमानस्य जुहुयात्॥ ९॥

यद्यार्भवे सर्वप्रायश्चित्तं जुहुयात्॥ द्वादश जगतीः पुरस्तादार्भवात्॥ १०॥

अथ **ब्रह्मणे प्रजापतये** बृहस्पतये अग्नये वायवे सूर्याय चन्द्रमसे नक्षत्रेभ्यः ऋतुभ्ये संवत्सराय इन्द्रायराज्ञे सोमायराज्ञे यमायराज्ञे वरुणायराज्ञे वैश्रवणायराज्ञे वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्योदेवेभ्यः साध्येभ्यो मरुद्भ्य **ऋभुभ्यो भृगुभ्यो आङ्गिरोभ्य** इति **देवगणनां**॥ ११॥

भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीड एहि सूनृत एहीतीडाया उपांश्रूपहवे सप्त देवगवीर्जपति। चिदसि मनासि धीरसि रन्ती रमतिः **सूनुः** सूनरीत्युच्चैरुपहवे सप्त मनुष्यगवीः॥ १२॥

## अथ अनुवाकः ३॥ सामवेदीय सूत्रः॥ ५३॥

**अथ सामवेदे कल्पे ऋषयोवाचः॥**

हुत आदित्यग्रहे प्रतिहर्तार्भवे॥ आभर्वेण स्तुत्वा पुरोडाशादेकैकं पिण्डं त्रींत्रीन्वा परया द्वारा हविर्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्युर्यदा सन्नः स्यादत्र पितरो मादयध्वं यथा भागमावृषायध्वमिति॥ स्वारणिचार्भवान्त्यानि॥ १॥

आर्भवे चेदेकोऽनुष्टुभि॥ एकर्च्चं स्थानेष्वनापद्यमानानि तृचेषु कुर्यात् गायत्रं त्रिणिधनं मध्यन्दिने मध्येनिधनं ऐडं आर्भवे॥ २॥

**आर्भवे पवमाने स्तूयमाने दक्षिणेन औदुम्बरीं कृष्णाजिनं उपस्तीर्य दक्षिणशिराः प्रावृतो निपद्येत। तदेव संगच्छते। तदेवंरियते** इति॥ ३॥

स्तुते यजमानं वाचयति **स्वरोऽसि गयोऽसि जगतीछन्दे**त्यार्भवे॥ ४॥

**प्र त आश्विवीः पवमान धेनव** इति लौशमन्त्यं आर्भवस्य समानमितरं॥ ५॥

**पार्थस्य लोके त्वाष्ट्रीसाम यद् द्व्यनुतोदं गोवित् पवस्वे**ति द्व्यभ्याघातं लौशमन्त्यं आर्भवस्य समानमितें॥ ६॥

**ज्योतिर्यज्ञास्य पवते मधु प्रियं मरुतां धेन्वन्त्यं** आर्भवस्य समानमितरं समानमितरं॥ एकविंश आर्भवः सप्तदश आर्भवः षोडश आर्भवः॥ ७॥

**स्वादिष्ठा**र्भवीया द्वितीयस्याह्निः॥ ८॥

दशमस्याह्न आर्भवः॥ ९॥

तान्येवोपरिष्टाद् आर्भवेष्वनुष्टुप्सु पंचानामह्नं॥ १०॥

चतुर्थस्याह्नो **वैराजं** आर्भवेऽनुष्टुभि॥ ११॥

षष्ठस्याह्नो **रेवत्य** आर्भवे गायत्र्यां॥ १२॥

बृहद्रथन्तरे वा निकामयमानः पूर्वावार्भवे कारेति॥ १३॥

## अथ अनुवाकः ४॥ अथर्ववेदीय सूत्रः॥ ५४॥

**अथ अथर्ववेदे कल्पे ऋषयोवाचः॥**

**ऋषिः अथर्वणः छन्दः अनुष्टुप् देवता पर्णमणि रथकारर्वा॥**

ये धीवानो रथकाराः कर्मारा ये मनीषिणः।

उपस्तीन्पर्ण महयं त्वं सर्वान् कृण्वभितो जनान्॥ १॥

स्तुतस्य स्तुतमस्यूर्जस्वत् पयस्वत्। ऊर्ज महयं स्तुतं दुहामा मा स्तुतस्य स्तुतं गमेत्। इन्द्रियावन्तो हवामहे धुक्षीमहि प्रजामिषं। सा मे सत्याशीर्देवेष्वस्तु। ब्रह्मवर्चसं मा गमयेदिति स्तोत्रमनु मन्त्रयते॥

स्तुते बहिष्पवमाने वाचयति **श्येनोऽसी**ति। **वृषासी**ति माध्यंदिने। **ऋभुरसी**त्यार्भवे॥ २॥

अच्छवाक भक्षाद् **आग्निः प्रातः सवने । श्येनोऽसि ।**

**यथा सोमः प्रातः सवन** इति यथा सवनं आज्यं जुहोति ॥ ३ ॥

**अथ अनुवाकः ५ ॥ वेद निरुक्तः ॥ ५५ ॥**

**श्री यास्क ऋषिरुवाच ॥**

**विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृत त्वमानशुः । सौधन्वना ऋभवः सूरचक्षसः सवंत्सरे समपृच्यन्त धीतिभिः ॥ १ ॥**

**ऋभव** उरु भान्तीति वा । **ऋतेन** भान्तीति वा । **ऋतेन** भवन्तीति वा । तेषामेषा भवति ॥ २ ॥

कृत्वा कर्माणि क्षिप्रत्वेन । वोळ्हारो मेधाविनो वा । मर्तासः सन्तोभमृतत्वमानशिरे । सौधन्वना ऋभवः सूरख्याना वा । सूरप्रज्ञा वा । संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः ॥ ३ ॥

**ऋभु र्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा** बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहीनि दशतयीषु सूक्तानि भवन्ति । आदित्यरश्मयोऽप्यृभव उच्यन्ते ॥ ४ ॥

**अहोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ।** अगोह्य आदित्योऽगूहनीयः तस्य यदस्वपथ गृहे । यावत्तत्र भवथ न तावदिह भवथेति ॥ ५ ॥

*अथ द्वादशोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऋग्वेदीय मेधा देवी सूक्तः ॥ ५६ ॥**

**॥ ऋषिका मेधा मानवीः छन्दः पङ्क्तिं त्रिष्टुप् अनुष्टुप् देवता मेधादेवीः ॥**

मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः ।
मेधामिन्द्रश्चाग्निश्च मेधां धाता ददातु मे ॥ १ ॥
मेधां मे वरुणो राजा मेधां देवी सरस्वती ।
मेधां ते- अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ २ ॥
या मेधां अप्सरस्सु गन्धर्वेषु च यन्मनः ।
देवी यामानुषी मेधा सामामाया विशतादिमां ॥ ३ ॥
मेधां देवीं मनसा रेजमानां गन्धर्व जुष्टां प्रति नो जुषस्व ।

महद्यं- मेधां वद महद्यं श्रियं- वद मेधावी भूयासमज राजरिष्णुः ॥ ४ ॥

मेधाव्यहं- सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिस्सुशेवः ।

महा यशाधारयिष्णुः प्रवक्ता भूयासमस्मैशरया प्रयोगे ॥ ५ ॥

याः मेधां देवगणाः पितरश्चोपासते ।

तया मामद्य मेधयामे मेधाविनं- कुरु ॥ ६ ॥ **मन्त्रसंख्या २०४**

**अथ अनुवाकः २ ॥ यजुर्वेदीय मेधा देवी सूक्तः ॥ ५७ ॥**

**॥ ऋषिका मेधा २ याज्ञीकः १ वामदेवः ३ छन्दः बृहतीं त्रिष्टुप् अनुष्टुप् देवता मेधादेवीः ॥**

मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना ।

त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुवीराः । १ ।

त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगतश्री रुत त्वया ।

त्वया जुष्टश्च चित्रं विन्दते वसु सा नो जुषस्व द्रविणो न मेधे । २ । ॥ १ ॥

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ।

मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा ॥ ३ ।

अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः ।

दैवीं मेधा सरस्वती सा मां मेधा सुरभिर्जुषतां ॥ ४ ।

आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ।

ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्तां । ५ । ॥ २ ॥

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु ।

मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु ।

मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । ६ । ॥ ३ ॥ **मन्त्रसंख्या २१०**

**अथ अनुवाकः ३ ॥ सामवेदीय मेधा देवी सूक्तः ॥ ५८ ॥**

**॥ ऋषिका मेधा मानवीः छन्दः अनुष्टुप् देवता मेधादेवीः ॥**

मेधां मे मित्रावरुणौ मेधां अग्नि र्ददातु मे ।

मेधां ते- अश्विनौ देवावाधत्तांपुष्करस्रजा ॥ १ ॥ **मन्त्रसंख्या २११**

**अथ अनुवाकः ४ ॥ अथर्वणवेदीय मेधा देवी सूक्तः ॥ ५९ ॥**

**॥ ऋषिका मेधा शुनकर्वा छन्दः अनुष्टुप् बृहतीं २ः३ देवता मेधादेवीः ॥**

त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि ।
त्वं सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया ॥ १ ॥
मेधां अहं प्रथमा ब्रह्मण्वतीं ब्रह्मजूतां ऋषिष्टुताम् ।
प्रपीतां ब्रह्मचारिभिर्देवानामवसे हुवे ॥ २ ॥
यां मेधां **ऋभवो** विदुर्यां मेधामसुरा विदुः ।
ऋषयो भद्रां मेधां यां विदुस्तां मय्या वे-शयामसि ॥ ३ ॥
यां ऋषयो भूतकृतो मेधां मे-धाविनो विदुः ।
तया मामद्य मेधायाग्ने- मेधाविनं- कृणु ॥ ४ ॥
मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परि ।
मेधां सूर्यस्य रश्मिभिर्वचसा वे-शयामहे ॥ ५ ॥ **मन्त्रसंख्या २१६**

**अथ अनुवाकः ५ ॥ ऋग्वेदीय केशिनी देवी सूक्तः ॥ ६० ॥**

**॥ ऋषिः दीर्घतमः उचथ्यः छन्दः जगतीः देवता केशिनीदेवीः ॥**

तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।
तासां जरां प्रमुञ्चन्नेति नानददसुं परं- जनय-ञ्जीवमस्तृतम् ॥ १ ॥
आ वामृताय केशिनीरनूषत मित्र यत्र वरुण गातुमर्चथः ।
अव त्मना सृजतं पिन्वतं धियो युवं विप्रस्य मन्मनामिरज्यथः ॥ २ ॥ **मन्त्रसंख्या २१८**

*अथ त्रयोदशोऽध्यायः ॥*

**अथ अनुवाकः १ ॥ ऋग्वेदीय सीता देवी सूक्तः ॥ ६१ ॥**

**॥ ऋषिः ऋभुः शांखायना वा छन्दः गायत्रीः अनुष्टुप् उष्णीक् देवता शुन सीताश्च ॥**

इन्द्र-श्च नः शुनासीराविमं यज्ञं- मिमिक्षतां ।
गर्भान्धत्तं स्वस्तये- ॥ १ ॥

ययोरिदं भुवनमा विवे-श ययोरानन्दो निहितो महश्च ।
शुनासीरावृतुभिः संविदाना इन्द्रवन्ता हविरिदं जुषेथां ॥ २ ॥
इन्द्राय शुनासीराय स्रुचा जुहुतना हविः ।
जुषतां प्रति मेधिरः ॥ ३ ॥
प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः ।
इन्द्र ऋभुभिर्ब्रह्मणा संविदानः शुनासीरी हविरिदं जुषस्व ॥ ४ ॥ **मन्त्रसंख्या २२२**

**अथ अनुवाकः २ ॥ यजुर्वेदीय सीता देवी सूक्तः ॥ ६२ ॥**

**॥ ऋषिः सुधन्वानः परास्करा वा छन्दः अनुष्टुप् विराट् देवता सीता ॥**

पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः ।
तमिहेन्द्रमुपह्वये- शिवा नः सन्तु हेतयः ॥ १ ॥
यन्मे किं चिदुपेत् सितमस्मिन् कर्मणि वृत्रहन् ।
तन्मे सर्व- समृध्यतां जीवतः शरदः शतं ॥ २ ॥
संपत्ति भूंति भूंमि वृंष्टि ज्यैष्ठ्यं- श्रीः प्रजामिहावतु स्वाहा ॥ ३ ॥
यस्या भावे वैदिक लौकिकानां भूति र्भवति कर्मणां ।
इन्द्रपत्नीमुह्वये सीतां सा मे त्वन्नपाथिनी भूयात्कर्मणि कर्मणि ॥ ४ ॥
अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता ।
खलमालिनीमुर्वरामस्मिन् कर्मण्युपह्वये ध्रुवां सा मे त्वनपायिनी भूयात् ॥ ५ ॥
**मन्त्रसंख्या २२७**

**अथ अनुवाकः ३ ॥ अथर्वणवेदीय सीता देवी सूक्तः ॥ ६३ ॥**

**॥ ऋषिः ऋभुः कौशिका वा छन्दः अनुष्टुप् त्रिष्टुप् उष्णीक् देवता श्रीसीता ॥**

कुमुद्वती पुष्करिणी सीता सर्वाङ्गशोभनी ।
कृषिः सहस्र प्रकारा प्रत्यष्टा श्रीरियं मयि ॥ १ ॥
उर्वी त्वाहुमनुष्याः श्रियं त्वा मनसो निदुः ।
आशये अन्नस्य नो धेह्यनमीवस्य शुष्मिणः ॥ २ ॥
पर्जन्यपत्नि हरिण्यभिजितास्यभि नो वद ।

कालने-त्रे हविषो नो जुषस्व तृप्तं- नो धेहि द्विपदे- चतुष्पदे ॥ ३ ॥
याभिर्देवा असुरानकल्पयन्यातूम्मनून् गन्धर्वान् राक्षसांश्च ।
ताभिर्नो अद्य सुमना उपा गहि सहस्रापोषं रराणा ॥ ४ ॥
हिरण्यस्रक् पुष्करिणी श्यामा सर्वाङ्गशोभनी ।
कृषिर्हिरण्य प्रकारा प्रत्यष्टा श्रीरियं मयि ॥ ५ ॥
अश्विभ्यां देवि सह संविदाना इन्द्रेण राधेन सह पुष्ट्या न आ गहि ।
विशस्त्वा रासन्तां प्रदिशोऽनु सर्वा अहोरात्रा अर्धमास मासा आर्तवा **ऋतुभिः** ॥ ६ ॥
भर्त्री देवानामुत मर्त्यानां भर्त्री प्रजानमुत मानुषाणां ।
हस्तिभिरितरासैः क्षे-त्रसारथिभिः सह । हिरण्यैरश्वैरा गोभिः प्रत्यष्टा श्रीरियं मयि ॥ ७ ॥

**मन्त्रसंख्या २३४**

**अथ अनुवाकः ४ ॥ ऋग्वेदीय देवरथ सूक्तः ॥ ६४ ॥**

**ऋषिः गौतमः राहूगणः छन्दः पङ्क्तिः देवता रथाक्षुः ॥**

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ १ ॥

**ऋषिः सूर्या सावित्रीः छन्दः अनुष्टुप् देवता पूर्वे रथचक्रः ॥**

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं- सूर्या आरोहत् प्रयती पतिम् ॥ २ ॥

**ऋषिः सूर्या सावित्रीः छन्दः अनुष्टुप् देवता पश्चिमे रथचक्रः ॥**

द्वे ते- चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः ।
अथैकं- चक्रे यद् गुहा तदद्धातय इद्विदुः ॥ ३ ॥

**ऋषिः सूर्या सावित्रीः छन्दः अनुष्टुप् देवता रथभारः ॥**

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्रस्त्रिः पूर्त्यव कृणोतु सूर्यत्वचं ॥ ४ ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः त्रिष्टुप् देवता रथस्तम्भः ॥**

वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयं रुहेम ।
यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय म्हते सौभगाय ॥ ५ ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः त्रिष्टुप् देवता रथाङ्गः ॥**

अभि व्ययसव खदिरस्य सारमोजो धेहि स्पन्दने शिंशपायाम् ।

अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिपो नः ॥ ६ ॥

**ऋषिः गर्गः भरद्वाजः छन्दः त्रिष्टुप् जगतीः २ देवता देवरथः ॥**

वनस्पते वीड्वे-ङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।

गोभिः संनद्धो असि वीळयस्वास्थाता ते- जयतु जेत्वानि ॥ ७ ॥

दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।

अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं- हविषा रथं- यज ॥ ८ ॥

इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।

सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥ ९ ॥

**ऋषिः पायुः भारद्वाजः छन्दः त्रिष्टुप् देवता देवरथः ॥**

रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।

तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमानाः ॥ १० ॥

**ऋषिः मेधातिथिः काण्वः छन्दः गायत्रीः देवता रथशाला ॥**

स्योना पृथिवि भवानृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथः ॥ ११ ॥

**ऋषिः सूर्या सावित्रीः छन्दः त्रिष्टुप् देवता रथमारोहनः ॥**

सुकिं शुकं शल्मलिं विश्वरू-पं हिरण्यवर्णं सुवृतं- सुचक्रम् ।

आरोह सूर्ये अमृतस्य लोकं स्योनं पत्ये- व्हतुं कृणुष्व ॥ १२ ॥

**ऋषिः शासः भरद्वाजः छन्दः अनुष्टुप् देवता अद्भुतः ॥**

शास इत्था महा॒ँअस्यमित्रखादो अद्भुतः ।

न यस्य हन्यते सखा न जीयते कदा च न ॥ १३ ॥

**ऋषिः गयः प्लातः छन्दः जगतीः देवता रथमवरोहनः ॥**

सुत्रामाणं पृथिवीं द्यामनेहसं- सुशर्माणमदितिं सुप्रणीतिम् ।

दैवीं नावं- स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये- ॥ १४ ॥

**ऋषिः गौतमः राहूगणः छन्दः पङ्क्तिः देवता महाकुले ऋभुवाचार्यः ॥**

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।
उत् त्वा सुयासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः ॥ १५ ॥

**ऋषिः गर्गः भारद्वाजः छन्दः अनुष्टुप् देवता आचार्यदक्षिणः ॥**

दशाश्वान्दश केशान्दश वस्त्राधिभोजना ।
दशो हिरण्यपिण्डान्दिवोदासादसानिषं ॥ १६ ॥ **मन्त्रसंख्या २५०**

## अथ अनुवाकः ५ ॥ ऋभुदेव मन्त्रानि ॥ ६५ ॥

**ऋषिः सव्यः आङ्गिरसः छन्दः जगतीः देवता ऐन्द्रार्भवः ॥**

अभीमवन्वन्स्वभिष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम् ।
इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत् ॥ १ ॥

**ऋषिः गृत्समदः शुनकः छन्दः जगतीः देवता आर्भवाग्निः ॥**

त्वमग्न ऋभुराके नमस्य १ स्त्वं वाजस्य क्षुमतो राय ईशिषे ।
त्वं वि भास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः ॥ २ ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः त्रिष्टुप् देवता आर्भवाग्निः ॥**

ऋभश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान् ।
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ३ ॥

**ऋषिः विश्वामित्रः गाथिनः छन्दः त्रिष्टुप् देवता ऐन्द्रार्भवः ॥**

इन्द्राय सोमा प्रदिवो विदाना ऋभुर्येभि वृषपर्वा विहायाः ।
प्रयम्यमानान्प्रति षू गृभायेन्द्र पिब वृषधूतस्य वृष्णः ॥ ४ ॥

**ऋषिः विश्वामित्रः गाथिनः वाचस्पतिर्प्रजापति वा छन्दः त्रिष्टुप् देवता त्वष्टार्भवः ॥**

सुकृत्सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात् ।
पूषण्वन्त ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥ ६ ॥

**ऋषिः विश्वामित्रः गाथिनः वाचस्पतिर्प्रजापति वा छन्दः त्रिष्टुप् देवता ऐन्द्रार्भवः ॥**

महत्तद्वः कवयश्चारु नाम यद्ध देवा भवथ विश्व इन्द्रे ।
सख ऋभुभिः पुरुहूत प्रियेभिरिमां धियं- सातये- तक्षता नः ॥ ७ ॥

**ऋषिः भुमः अत्रिः छन्दः त्रिष्टुप् देवता ऐन्द्रार्भवः ॥**

देवो भगः सविता रायो अंश इन्द्रो वृत्रस्य संजितो धनानाम्।
ऋभुक्षा वाज उत वा पुरंधिरवन्तु नो अमृतासस्तुरासः॥ ८॥

**ऋषिः ऋजिश्वः भरद्वाजः छन्दः त्रिष्टुप् देवता विश्वे देवार्भवः॥**

ते नो रुद्रः सरस्वती सजोषा मीळ्हुष्मन्तो विष्णुर्मृळन्तु वायुः।
ऋभक्षा वाजो दैव्यो विधाता पर्जन्यावाता पिप्यतामिषं- नः॥ ९॥

**ऋषिः मेधातिथिः काण्वः छन्दः प्रगाथः (विषमर्चा बृहती समर्चा सतोबृहतीः) देवता ऐन्द्रार्भवः॥**

अभि त्वा पूर्वपीतय इन्द्र स्तोमे भिरायवः।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम्॥ १०॥

**ऋषिः श्यावाश्वः अत्रिः छन्दः उपरिष्टाज्जोतिः देवता आर्भवाश्विनौ॥**

ऋभुमन्ता वृषणा वाजवन्ता मरुत्वन्ता जरितुगच्छथो हवम्।
सजोषसा उषसा सूर्ये-ण चादित्यैर्यातमश्विना॥ ११ ॥

**ऋषिः त्रिशोकः काण्वः छन्दः गायत्रीः देवता ऐन्द्रार्भवः॥**

ऋभुक्षणं न वर्तव उक्थेषु तुग्र्यावधृम्।
इन्द्रं सोमे सचा सुते॥ १२ ॥

**ऋषिः असितः काश्ययः देवल वा छन्दः गायत्रीः देवता आर्भवपवमानः॥**

ऋभुर्न रथ्यं नवं दधाता केतमादिशे-।
शुक्राः पवध्वमर्णसा॥ १३॥

**ऋषिः वसुकृद्वः वसुक्रः छन्दः जगतीः देवता ऐन्द्रार्भवः॥**

हरी न्वस्य या वने विदे वस्विन्द्रो मघैर्मघवा वृत्रहा भुवत्।
ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित्॥ १४॥

**ऋषिः प्लातः गयः छन्दः जगतीः देवता विश्वे देवार्भवः॥**

उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः।
ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शसंः शशमानस्य पातु नः॥ १५॥

**ऋषिः वसुकर्णः वसुक्रः छन्दः जगतीः देवता विश्वे देवार्भवः॥**

धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः।
आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम्॥ १६॥

**ऋषिः गौरिवीतिः शाक्त्यः छन्दः त्रिष्टुप् देवता ऐन्द्रार्भवः ॥**

शचीव इन्द्रमवसे कृणुध्वमनानतं दमयन्तं पृतन्यून् ।

ऋभुक्षणं- मघवानं सुवृक्तिं भर्ता यो वज्रं नर्य- पुरुक्षुः ॥ १७ ॥

**ऋषिः पार्थस्तान्वः छन्दः प्रस्तारपङ्क्तिः देवता विश्वे देवार्भवः ॥**

उत नो रुद्रा चिन्मृळतामश्विना विश्वे- देवासो रथस्पतिर्भगः ।

ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः ॥ १८ ॥

**ऋषिः पार्थस्तान्वः छन्दः प्रस्तारपङ्क्तिः देवता विश्वे देवार्भवः ॥**

ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना ।

दुष्टरं यस्य साम चिदृ धग्यज्ञो न मानुषः ॥ १९ ॥

**ऋषिः दुर्मित्रः कुत्सः सुमित्रः गुणतः विपर्यस्तनामा वा छन्दः पिप्लिकमध्यः देवता ऐन्द्रार्भवः ॥**

प्रास्तौदृष्वौजा ऋष्वोभिस्ततक्ष शूरः शवसा ।

ऋभुर्न क्रतुभिर्मातरिश्वा ॥ २० ॥

**ऋषिः ताक्षर्यः सुपर्णः यामायन ऊर्ध्वकृशनः वा छन्दः बृहतीः देवता ऐन्द्रार्भवः ॥**

अयमस्मासु काव्य ऋभुर्वज्रो दास्वते ।

अयं बिभर्त्यूर्ध्वकृशनं मदमृभुर्न कृत्व्यं मदम् ॥ २१ ॥

**मन्त्रसंख्या २७१**

### *अथ चतुर्दशोऽध्यायः ॥ ६६*

### अथ असुरेन्द्रगीता ॥ १ ॥ श्रीमहाभारते सभापर्वणि अध्यायं ६१ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनं। प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च॥ १॥ प्रह्लादो नाम दैत्येन्द्रस्तस्त पुत्रो विरोचनः। कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत्॥ २॥ प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः। कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत्॥ ३॥ अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा। तयोर्देवनमत्रासीत् प्राणयोरिति नः श्रुतं ॥ ४ ॥ तयोः प्रश्नविवादो ऽभूत् प्रह्लादं तावपृच्छतां। ज्यायान्क आवयोरेलः प्रश्नं प्रब्रूहि मा मृषा॥ ५॥ स वै विवदनाद्भीतः सुधन्वानं व्यलोकयत्। तं सुधन्वाब्रवीत् क्रुद्धो ब्रह्मदण्ड इव ज्वलन्॥ ६॥ यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि। शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति॥ ७॥ सुधन्वना तथोक्तः सन्व्यथितोऽश्वेत्थपर्णवत्॥ ८॥ प्रह्लादोवाचत्वं वै धर्मस्यविज्ञाता दैवस्येहासुरस्यच।ब्राह्मणस्य

महाप्राज्ञ धर्मकृच्छ्रमिदं शृणु ॥ ९॥ यो वै प्रश्नं न विब्रूयाद्वितथं वापि निर्दिशेत्। के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः॥ १०॥ कश्यपउवाच जानन्न विब्रुवन् प्रश्नं कामात् क्रोधत्तथाभयात्। सहस्रं वारुणान् पाशानात्मनि प्रतिमुंचति॥ ११॥ तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते। तस्मात्सत्यं तु वक्तव्यं जानता सत्यमंजमा॥ १२॥ विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते। न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः॥ १३॥ अर्धं हरति वै श्रेष्ठः पादो भवति कर्तृषु।पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितं॥ १४॥ अनेना भवति श्रेष्ठो मुच्यन्ये च सभासदः। एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते॥ १५॥ वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते। इष्टापूर्तं च ते घ्नन्ति सप्त चैव परावरान्॥ १६॥ हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चापि यत्। ऋणिनं प्रति यच्चैव राज्ञा ग्रस्तस्य चापि यत्। स्त्रियाः पत्या विहीनायाः सार्थाद्भ्रष्टस्य च॥ १७॥ एतानि वै समान्याहुर्दुःखानि त्रिदशेश्वराः। तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन्॥ १८॥ स्मक्षदर्शनात्साक्ष्यं श्रवणच्चेति धारणात्। तस्मात् सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते॥ १९॥ विदुर उवाच कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत्। श्रेयान् सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः॥ २०॥ माता सुधन्वनश्चापि श्रेयसी मातृतस्तव। विरोचन सुधन्वायं प्राणाना मीश्वरस्तव॥ २१॥ सुधन्वोवाच पुत्रस्नेहं परित्यस्य यस्त्वं धर्मे प्रतिष्ठितः। अनुजानामि ते पुत्रं जीवत्वेष शतं समाः॥ २२॥ विदुर उवाच एवं वै परमं धर्मं श्रत्वा सर्वे सभासदः। यथाप्रश्नं तु कृष्णायाः मन्यध्वं शतं समाः॥ २३॥ **श्लोकसंख्या २३॥**

### *अथ पंचदशोऽध्यायः॥ ६७*

### अथ असुरेन्द्रगीता॥ २॥ श्रीमहाभारते उद्योगपर्वणि अध्यायं ३५॥

### अत्राप्युदाहरन्तीममितिहासं पुरातनं। पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना॥

अत्राप्युदाहरन्तीममितिहासं पुरातनं। विरोचनस्य संवादं केशिन्यर्थे सुधन्वना॥ १॥ केशिन्युवाच किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन। अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति॥ २॥ विरोचन उवाच प्राजापत्या हि वै श्रेष्ठा वयं केधिन सत्तमाः। अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः॥ ३॥ केशिन्युवाच इहैवास्स्व उपस्थाने विरोचन। सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ॥ ४॥ विरोचन उवाच तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे। सुधन्वानं च मां चैव प्रातर्द्रष्टासि संगतौ॥ ५॥ सुधन्वोवाच अन्वालभे हिरण्मयं प्राह्लादेऽह तवासनं। एकत्वमुपसम्पन्नो न त्वासेयं त्वया सह॥ ६॥ विरोचन उवाच अन्वाहरन्तु फलकं कूर्चं वाप्यथ वा बृसीं। सुधन्वन्न

त्वमर्होभसि मया सह समासनं ॥ ७ ॥ सुधन्वोवाच पितापि ते समासीनमुपासीतैव मामधः। बालः सुखैधितो गेहे न त्वं किंचन बुध्यसे ॥ ८ ॥ विरोचन उवाच हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः। सुधन्वन् विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ ९ ॥ सुधन्वोच हिरण्यं च गवाश्वं च तवैवास्तु विरोचन। प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ १० ॥ विरोचन उवाच आवां कुत्र गमिष्यावः प्राणयोर्विणपणे कृते। न हि देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ ११ ॥ सुधन्वोवाच पितरं ते गमिष्यावः प्राणयोर्विपणे कृते। पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ १२ ॥ प्रह्लाद उवाच इमौ तौ सम्प्रदृयेते याभ्यां न चरितं सह। आशीविषाविव क्रुद्धावेकमार्गमिहागतौ ॥ १३ ॥ किं वै सहैव चरतो न पुरा चरतः सह। विरोचनैतत् पृच्छामि किं ते सख्य सुधन्वना ॥ १४ ॥ विरोचन उवाच न मे सुधन्वना सख्यं प्राणयोर्विपणवहे। प्रह्लाद तत् त्वां पृच्छामि मा प्रश्नमनृतं वदीः ॥ १५ ॥ **प्रह्लाद उवाच उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने। ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता ॥ १६ ॥** सुधन्वोवाच उदकं मधुपर्कं च पथ एवार्पितं मम। प्रह्लाद त्वं तु नौ प्रश्नं तथ्यं प्रब्रूहि पृच्छतोः ॥ १७ ॥ प्रह्लाद उवाच पुत्रो वान्यो भवान् ब्रह्मन् साक्ष्ये चैव भवेत्स्थितः। तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ १८ ॥ अथ यो नैव प्रब्रूयात् सत्यं वा यदि वानृतं। एतत् सुधन्वन् पृच्छामि दुर्विवक्ता स्म किं वसेत् ॥ १९ ॥ सुधन्वोवाच यां रात्रिमधिनिन्ना स्त्री यां चैवाक्षपराजितः।यां च भाराभि तप्तांगो दुर्विवक्ता स्म तां वसेत् ॥ २० ॥ नगरे प्रतिरुद्धः सन्बहिद्वारे बुभुक्षितः। अमित्रान् भूयसः पश्यन् दुर्विवक्ता स्म तां वसेत् ॥ २१ ॥ पंच पश्वनृते हन्ति दश हन्ति गवानृते। शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ २१ ॥ हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्। सर्वभूम्यनृते हन्ति मा स्म भूमयनृतं वदीः ॥ २२ ॥ प्रह्लाद उवाच मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन। मातास्त श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ २३ ॥ विरोचन सुधन्वायं प्राणानामीश्वरस्तव। सुधन्वान् पुनरिच्छामि त्वया दत्तं विरोचनं ॥ २४ ॥ सुधन्वोवाच यद्धर्ममवृणीथास्त्वं न कामासनृतं वदीः। पुर्नददामि ते तस्मात् पुत्रं प्रह्लाद दुर्लभं ॥ २५ ॥ एष प्रह्लाद पुत्रस्ते मया दत्तो विरोचनः। पादप्रक्षालनं कुर्यात् कुमार्याः संनिधौ मम ॥ २५ ॥ **श्लोकसंख्या ४८**

### *अथ षोडशोऽध्यायः ॥ ६८*

### ॥ अथ श्रीविष्णुमहापुराणे अँशः २ अध्यायं १५ ॥ श्री ऋभुगीता ॥ १ ॥

श्रीपराशर उवाच इत्युक्ते मौनिनं भूयाश्चिन्तयानं महीपतिं। प्रत्युवाचाथ विप्रोदावद्वैतान्तर्गतां कथां ॥१ ॥ ब्राह्मण उवाच श्रूयतां नृपाशार्दूलं यद्गीतं ऋभुणा पुरा। अवबोधं जनयता निदाघस्य

महात्मनः॥ २॥ ऋभुनामा अभवत्पुत्रो ब्रह्मणः परमेष्ठिनः। विज्ञाततत् त्वसद्भावो निसर्गादिव भूपते॥ ३॥ तस्य शिष्यो निदाघो भूत् पुलस्त्यतनयः पुरा। प्रादादशेषविज्ञानं स तस्मै परया मुदा॥ ४॥ अपाप्तज्ञानतन्त्रस्य न तस्याद् वैतवासाना। स ऋभुस्तकत्यामास विदाघस्य नरेश्वर॥ ५॥ देविकायास्तटे वीरनगरं नाम वै पुरं। समृद्धमतिरम्यं च पुलस्त्येन निवेधित्म॥ ६॥ रम्योपवनपर्यन्ते स तस्मिन् पार्थिवोत्तम। विदाघो नाम योगज्ञ ऋभु शिष्योवसत्पुरा॥ ७॥ दिव्ये वर्षसहस्रे तु समतीतेस्य तत्पुरं। जगाम स ऋभुः शिष्यं निदाघमवलोककः॥ ८॥ स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे। स्थितस्तेन गृहीतार्घ्यो निजवेश्म प्रवेशितः॥ ९॥ प्रक्षालितांघ्रिपाणिः च कृतासनपरिग्रहं। उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरं॥ १०॥ ऋभुरुवाच भो विप्रवर्य भोक्तव्यं यदन्नं भवतो गृहे। तत्कथ्यतां कदन्नेषु न प्रीतिः सततं मम॥ ११॥ विदाघ उवाच सुक्तयावकवाट्यानामपूपानां च मे गृहे। यद्रोचते द्विजश्रेष्ठ तत् त्वं भुंक्ष्व यथेच्छया॥ १२॥ ऋभुरुवाच कदन्नानि द्विजैतानि मृष्टमन्नं प्रयच्छ मे। संयावपासादीनि द्रप्सफाणितवन्ति च॥ १३॥ निदाघ उवाच हेहे शालिनि मद्गेहे यत् किं चिदितिशोभनं। भक्ष्योपसाधमं मृष्टं तेनास्यान्नं प्रसाधय॥ १४॥ ब्राह्मण उवाच इत्युक्त तेन सा पन्ती मृष्टमन्नं। द्विजस्य यत् प्रसाधितवती तद्वै भ तुर्वचनगौरवां॥ १५॥ तं भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिं। निदाघः प्राह भूपाल प्रश्रयावनतः स्थितः॥ १६॥ निदाघ उवाच अपि ते पराम तृप्तिरुत्पन्ना तुष्टिरेव च। अपि ते मानसं स्वस्थमाहारेण कद्यतं द्विज॥ १७॥ क्वनिवासो भवान्विप्र क्व च गन्तुं समुद्यतः। आगम्यते च भवता यतस्तच्च द्विजोच्यतां॥ १८॥ ऋभुरुवाच क्षद्यस्य तस्य भुक्तेन्ने तृप्ति ब्राह्मण जायते। न मे क्षुन्नभ वत् तृप्तिः कस्मान्मां परिपृच्छसि॥ १९॥ वह्निना पार्थिवे धातौ क्षपिते क्षुत्समुद्भवः। भवत्यम्भसि च क्षीणे नृणां तृडपि जायते॥ २०॥ क्षुत्तुष्णे देहधर्माख्ये न ममैते यतो द्विज। ततः क्षुत्सम्भवाभ ावात्तृप्तिरस्त्येव मे सदा॥ २१॥ मनसः स्वस्थता तुष्टिश्चित्तधर्माविमौ द्विज। चेतसो यस्य तत्पृच्छ पुमानेभिर्न युज्यते॥ २२॥ क्व निवासस्तवेत्युक्तं क्व गन्तासि च यत् त्वया। कुताश्चागम्यते तत्र त्रितयेति निबोध मे॥ २३॥ पुमान्सर्वगतो व्यापी आकाशवदयं यतः। कुतः कुत्र क्व गन्तासीत्ये तदप्यर्थवत्कथं॥ २४॥ सोहं गन्ता न चागन्ता नैकदेशनिकेतनः। त्वं चान्ये च न च त्वं च नान्ये नैवाहमप्हं॥ २५॥ मृष्टं न मृष्टमप्येषा जिज्ञासा मे कृता तव। किं वक्ष्यसीति तत्रापि श्रूयतां द्विजसत्तम॥ २६॥ किमस्वाद्वाथ वा मृष्टं भुंजतोस्ति द्विजोत्तम। मृष्टमेव यथा मृष्टं तदेवोद्वेगकारकं॥ २७॥ अमृष्टं जायते मृष्टादुद्विजते जनः। आदिमध्यावसानेषु किं अननं

रुचिकारकं ॥ २८ ॥ मृण्मयं गृहं यद्वन्मृदा लिप्तं स्थिरं भवेत्। पार्थिवोयं तथा देहः पार्थिवैः परामणुभिः ॥ २९ ॥ यवगोधूममुद्गादि घृतं तैलं पयो दधि। गुडं फलादीनि तथा पार्थिवाः परमाणवः ॥ ३० ॥ तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि तय्। तन्मनस्समतालम्बि कार्यं साम्यं हि मुक्तये ॥ ३१ ॥ ब्राह्मण उवाच इत्याकर्ण्य वचस्तस्य परमार्थाश्रितं नृप। प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ॥ ३२ ॥ प्रसीद मद्धिरार्थाय कथ्यतां यत् त्वमागतः। नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ॥ ३३ ॥ **ऋभुरुवाच ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज**। इहागतोहं यास्यामि परमार्थस्तवोदितः ॥ ३४ ॥ एवमेकमिदं विद्धि न ेादि सकलं जगत्। वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ ३५ ॥ ब्राह्मण उवाच तथेत्युक्त्वा निदाघेन प्रणिपातपुरः सरं। पूकतः परया कृता इच्छातः प्रययाव् ऋभुः ॥ ३६ ॥ **श्लोकसंख्या ८४ ॥**

## *अथ सप्तदशोऽध्यायः ॥ ६९*

### ॥ अथ श्रीविष्णुमहापुराणे अँशः २ अध्यायं १६ ॥ ऋभु कृताय अद्वैतविद्या ॥ १ ॥

ब्राह्मण उवाच ऋभुर्वर्षसहस्रे तु समतीते नरेश्वर। निदाघज्ञानदानाय तदेव नगरं ययौ ॥ १ ॥ मगरस्य बहिः सोथ निदाघं ददृशे मुनिः। महीबलपरीवारे पुरं विशति पार्थिवे ॥ २ ॥ दूरे स्थितं महाभागं जनसम्मर्दवर्जकं। क्षुत्क्षामकण्ठमायान्तमरण्यात्ससमित्कुशं ॥ ३ ॥ दृष्ट्वा निदाघं स ऋभुरुपगमुाभिवाद्य च। उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥ ४ ॥ निदाघ उवाच भो विप्र जनसंमर्दो महानेष नरेश्वरः। प्रविविक्षुः परं रम्यं तेनात्र स्थीयते मया ॥ ५ ॥ ऋभुरुवाच नराधिपोत्र कतमः कतमश्चेतरो जनः। कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥ ६ ॥ निदाघ उवाच योयं गजेन्द्रमुन्मत्तमद्रिशृङ्गसमुच्छ्रितं। अधिरूढो नरेन्द्रो अयं परिलोकस्तथेतरः ॥ ७ ॥ ऋभुरुवाच एतौ हि गजराजानौ युगपद्दर्शितौ मम। भवता न विशेषेण पृथक्चिह्नोपलक्षणौ ॥ ८ ॥ तत्कथ्यतां महाभाग विशेषो भवतानयोः ॥ ज्ञातुमिच्छाम्यहं कोत्र गजः को वा नराधिपः ॥ ९ ॥ विदाघ उवाच गजो योयमथो ब्रह्मन्नुपर्यस्यैष भूपतिः। वाह्यवाहकसम्बन्धं को न जानातत वै द्विज ॥ १० ॥ ऋभुरुवाच जानाम्यहं यथा ब्रह्यंस्तथा मामवबोधय। अधः शब्दनिगद्यं हि किं चोर्ध्वमभिधीयते ॥ ११ ॥ ब्राह्मण उवाच इत्युक्तः सहसारुह्य निदाघः प्राह तं ऋभुं। श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥ १२ ॥ उपर्यहं यथा राजा त्वमधः कुंजरो यथा। अवबोधाय ते ब्रह्मन्दृष्टान्तो दर्शितो मया ॥ १३ ॥ ऋभुरुवाच तवं राजेव द्विजश्रेष्ठ स्थितोहं गजवद्यादि। तदेतत् त्वं समाचक्ष्व कतमस्त्वमहं तथा ॥ १४ ॥ ब्राह्मण

उवाच इत्युक्तः सत्वरं तस्य प्रगृह्य चरणावुभौ। **निदाघस्त्वाह भगवान् आचार्यस्त्वं ऋभु ध्रुवं॥ १५॥** नान्यस्य **अद्वैतसंस्कार** संस्कृतं मानसं तथा। यथा **आचार्यस्य** तेन त्वां मन्ये **प्राप्तमहं गुरुं**॥ १६॥ ऋभुरुवाच तवोपदेशदानाय पूर्वशुश्रुषणादृतः। गुरुस्नेहाद् ऋभुर्नाम निदाघ समुपागतः॥ १७॥ तदेतदुपदिष्टं ते संक्षेपेण महामते। परमार्थसारभूतं तत्त**दद्वैतम**शेषतः॥ १८॥ ब्राह्मण उवाच एवमुक्त्वा ययौ विद्वान् निदाघं स ऋभुर्गुरुः। निदाघोप्युदेशेन तेनाद्वैतपरो भवत्॥ १९॥ सर्वभूतान्यभेदेन ददृशे स तदात्मनः। यथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः॥ २०॥ तथा त्वमपि धर्मज्ञ तुल्योत्मरिपुबान्धवः। भव सर्गगतं जानन्नात्मनमवनीतपे॥ २१॥ सितनीलादिभेदेन यदैकं दृश्यते नभः। भ्रान्तदृष्टिभिरात्मापि तथैकः सन्पृथक्पृथक्॥ २२॥ एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोन्यत्। सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहं॥ २३॥ श्रीपराशर उवाच इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः। स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप॥ २४॥ इति रतनरेन्द्रसारवृत्तं कथयति यश्च शृणोति भक्तियुक्तः। स विमलमतिरेति नात्ममोहं भवति च संसरणेणु मुक्तियोग्यः॥ २५॥ **श्लोकसंख्या १०९**

## *अथाष्टादशोऽध्यायः॥ ७०*

### अथ आग्नेय महापुराणे अध्यायं ३७९ ॥ ऋभु कृताय अद्वैत ब्रह्मविज्ञानं॥ २॥

ब्राह्मण उवाच। भूयः पृच्छसि किं श्रेयः परमार्थैन्न पृच्छसि। श्रेयांस्यपरमार्थानि अशेषाण्येव भूपते॥ १॥ देवताराधनं कृत्वा धनसम्पत्तिमिच्छति। पुत्रानिच्छति राज्यंच श्रेयस्तस्यैव किं नृप॥ २॥ ववेकिनस्तु संयोगः श्रेयो यः परमात्मनः। यज्ञादिका क्रिया न स्यात् नास्ति द्रव्योपपत्तिता॥ ३॥ परमार्थात्मनोर्योगः परमार्थ इतीष्यते। एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥ ४॥ जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः। परं ज्ञानमयोऽसङ्गी गुणजात्यादिभिर्विभुः॥ ५॥ विदाघ ऋभु संवादं वदामि द्विज तं शृणु। ऋभु ब्रह्म सुतो ज्ञानी तच्छिष्योऽभूत्पुलस्त्यजः॥ ६॥ विदाघः प्राप्तविद्योऽस्मान्नगरे वै पुरे स्थितः। देविकायास्तटे तंज तर्कयामास वै ऋतुः॥ ७॥ दिव्ये वर्षसहस्रेऽगान् निदाघमवलोकितुं। विदाघो वैश्वदेवान्ते भुक्त्वान्नं शिष्यमब्रवीत्। भुक्तन्ते तृप्तिरुत्पन्ना तुष्टिदा साक्षया यतः॥ ८॥ ऋभुरुवाच क्षुसस्ति यस्य भुक्तेऽन्ने तुष्टिर्ब्राह्मण जायते। न मे क्षुदभवत्तृप्तिं कस्मात् त्वं पतिपृच्छसि॥ ९॥ क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज। पृष्टोऽहं तत् त्वया ब्रूयां तृप्तिरस्त्येव मे सदा॥ १०॥ पुमान् सर्वगतो व्यापी आकाशवदयं यतः। अतोभहं

प्रत्यात्मास्मीत्येतदर्थे भवेत् कथं ॥ ११ ॥ सोऽहं गन्ता न चागन्ता नैकदेशनिकेतनः। त्वं चान्यो न भवेन्नापि नान्यस्त्वत्तोऽस्मि वा प्यहं ॥ १२ ॥ मृण्मयं हि गृहं यद्वन्मृदालिप्तं स्थिरीभवेत्। पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः॥ १३॥ ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज। इहागतोऽहं यास्यामि परमार्थस्तवोदितः॥ १४॥ एकमेवामिदं विद्धि न भेदः सकलं जगत्। वासुदेवाभिधेयस्य स्वरूपं परमात्नमं॥ १५॥ ऋभुर्वर्षसहस्रान्ते पुनस्तन्नगरं ययौ। निदाघं नगरप्राते एकान्ते स्थितमब्रवीत ॥ १६ ॥ निदाघ उवाच भो विप्र जनसंवादो महानेष नरेश्वरः। प्रविवीक्ष्य पुरं रम्यं तेनात्र स्थीयते मया ॥ १७ ॥ ऋभुरुवाच नराधिपोऽत्र कतमः कतमश्चेतरो जनः। कथ्यतां मे द्विजश्रेष्ठ त्वभिज्ञो द्विजोत्तम॥ १८॥ योऽयं गजेन्द्रमुन्म त्तमद्रिशृङ्गसमुत्थितं। अधिरूढो नरेन्द्रोऽयं परिवारस्त्थेतरः॥ १९॥ गजो योऽयमधो ब्रह्मन्नुपर्यैष सभूपतिः। ऋभुराह गजः कोऽत्र राजा चाह निदाघकः॥ २०॥ ऋभुर्निदाघ आरूढो दृष्टान्तं पश्य वाहनं। उपर्यहं यथा राजा त्वमधः कुंजरो यथा ॥ २१ ॥ **ऋभुः प्राह निदाघन्तं ब्रह्मज्ञानाय चागतः। परमार्थं सारभूतं अद्वैतं दर्शितं मया ॥ २२ ॥** ब्राह्मण उवाच निदाघोऽप्युपदेशेन तेन अद्वैत परोऽभवत्। सर्वभूतान्यभेदेन ददृशे स तदात्मनि ॥ २३ ॥ अवाप मुक्तिं ज्ञानात्स तथा त्वं मुक्तिमाप्स्यसि। एकः समस्तं त्वंचाहं विष्णुः सर्वगतो यतः ॥ २४॥ पीतनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभिदेन यथैकः स पृथक् पृथक्॥ २५॥ अग्निरुवाच मुक्तिं ह्यवाप भवतो ज्ञानसारेण भूपतिः। संसारराज्ञानवृक्षारिज्ञानं ब्रह्मेति चिन्तय॥ २६ ॥

## *अथैकोनविंशोऽध्यायः ॥*

## ॥ अथ स्तूपिकील प्रतिष्ठा लक्षणं कुम्भाभिषेक विधि च ॥ ७१ ॥

**ऋषि मानसारोवाच॥** सृष्टिं विश्वकर्माणं ध्यानं कृत्वा तु वार्चयेत्। सृष्टिस्थिति लयाधारं भुवनाधिपतिं मनाक्॥ १॥ स्तूपिकील प्रतिष्ठा च लक्षणं वक्ष्यतेऽधुना। प्रासादाभिमुखो वापि चोत्तरे चैशके वापि॥ २॥ यागमण्डप सङ्कल्प्य चोक्तवल्लक्षणान्वितं। अङ्कुरार्पणमादौ च कारयेदधिवासनं॥ ३॥ मण्डपे स्थण्डिलं कृत्वा शालिभिश्च स्थलं न्यसेत्। पंचविशत्पदं न्यस्य शुद्धतण्डुलरेखया॥ ४॥ दर्भैरास्तीर्य तत्पश्चात् पाक्षालनं कुरु। ततश्चाचमनं कुर्यात्सकलीकरणं कुरु ॥ ५॥ पुण्याहं वाचयित्वा तु स्थपतिर्ब्रह्मणैः सह। ब्रह्मादि देवतानां च गन्दपुष्पादि धूपकैः॥ ६॥ स्तूपिकीलं समुद्धृत्य स्थण्डिलोपरि विन्यसेत्। ईशास्यानः प्रदेशे तु मूककुम्भं विनिक्षिपेत्॥ ७॥ ससूत्राङ्ग सवस्त्रं च सकुर्चान् रुद्रपल्लवान्। सविधानफलं युक्तं परितेऽष्टघटान्न्यसथत्॥ ८॥

कीलस्य पूर्वदिग्देशे रत्नलोहैश्च निक्षिपेत्। नववस्त्रे सकुर्च च आच्छाद्य रत्नपात्रकं॥ ९॥ स्तूपिकीलं च संछाद्य नववस्त्रेण कूर्चकं। आराध्य मूलकुम्भे तु भुवनाधिपतिं जपेत्॥ १०॥ गन्धपुष्पैः समभ्यर्च्य नैवेद्यानि निवेदयेत्। धूपदीपं दद्येत् पश्चान् नृत्तगीतादि घोषणैः॥ ११॥ इन्द्रादि चाष्टकुम्भानामष्ट शक्तीः प्रपूजयेत्। प्रणवादि नमोऽन्तेन तत्तन्नाम्ना प्रपूयेत्॥ १२॥ स्तूपिकीलं समभ्यर्च्य गन्धपुष्पैश्च धूपकैः। कुण्डे वा स्थण्डिले वापि होमं कुर्यात्तदग्रके॥ १३॥ समिदा चरुं लाजान् प्रत्येकं पंचविंशति। हृल्लेखाबीजमुच्चार्य प्रणवादि नमोऽन्तकं॥ १४॥ व्याहृत्यान्ते ततः शिल्पी स्थण्डिले प्रान्तमाश्रयेत्। यद्यद्देवालये कीलं ध्यात्वा तत् पररुपकं॥ १५॥ तत्तन्मन्त्रं समुच्चार्य चार्चयेत् स्तूपिकीलकं। तत्तद्देवासनं ध्यात्वा चतुर्मूर्ध्नेष्टकान् सुधीः॥ १६॥ नवनस्त्रेण गोप्याङ्गमिष्टकैरक्षरं लिखेत्। प्रागाच्च सहकारदि शस्त्रेण रेखयेत्॥ १७॥ स्तूपिकीलं चतुर्दिक्षु सूत्रं प्रागादि लेखयेत्। श्रीवत्साकारमग्रे तु वक्त्रं धृत्वा लिखेद्बुधः॥ १८॥ स्वस्ति वाचक घोषेण यजशब्दादि मङ्गलैः। गैरिकं वै मधुक्षीरं स्वर्णतूलिकया लिखेत्॥ १९॥ वस्त्रमाच्छादनं तत्र वत्सगोकन्यकैः सहः। मधुसर्पि धान्यराशिं दर्शयेच्छिल्पिवित्तमः॥ २०॥ आराध्य गन्धपुष्पैश्च सर्वमङ्गलघोषणैः। नाना वस्त्रेण संवेष्टय पुष्पमाल्यैरलङ्कृतं॥ २१॥ लंबकूर्च समभ्यर्च्य ग्रामादीनां प्रदक्षिणं। स्तूपिकीलं समादाय आरुरोह विमानकं॥ २२॥ पालिकोपति तत् प्रान्ते नासिकोपरि प्रान्ते च। रत्नगर्त तु संकल्प्य कीलं प्राग्दर्शनं न्यसेत्॥ २३॥ नवरत्नानि लोहैश्च तत्तन्मन्त्रेण चार्चयत्। त्रित्रिकोष्ठे तु तद्गर्भे तन्मध्ये स्वर्ण विनिक्षिपेत्॥ २४॥ इन्द्रे ताम्रं विनिक्षिप्य याम्ये निक्षिप्य चायसं। पश्चिमे अत्र प्रविप्रवालं न्यस्य चोत्तरे रजतं क्षिपेत्॥ २५॥ मध्ये तु पद्मरागं तु वज्रं चैवेन्द्रकोष्ठके। विद्रुमं चाग्निकोणे तु याम्ये नीलं तु विन्यसेत्॥ २६॥ नैर्ऋत्ये पुष्परागं तु प्रत्यङ् मरकतं क्षिपेत्। गोमेदकं न्यसेद् वायौ सौम्ये मौक्तिक विन्यसेत्॥ २७॥ ईशे स्फाटिक निक्षित्य तत् तद् देवान् स्वनामतः। प्रणवादि नमोऽन्तेन चोच्चरन् रत्नं विन्यसेत्॥ २८॥ स्थपतिर्वरवेषाढ्यः प्राप्तपंचांगभूषणः। सुमुहूर्ते सुलग्ने च जयशब्दादि मंगलैः॥ २९॥ ब्राह्मणैश्च यथाशक्त्या वाचयेत् स्वस्ति वाचनं। स्तूपिकीलं समुद्धृत्य स्थपतिः स्थापकैः सह॥ ३०॥ एतद्गर्तोपरि स्थाप्य मूलमन्त्रं समुच्चरन्। स्तूपिकीस्य पतिः स्थापयेच्चतुरिष्टकं॥ ३१॥ पूवादि च शकारादीं नन्द्यावर्तं क्रमान्नयसेत्। प्राक् मूलकुम्भतोयेन पूजयेच्चतुरिष्टकान्॥ ३२॥ शुद्धतोयेन सम्पूर्य गन्धपुष्पैः समर्चयेत्। पूर्ववत् समलङ्कृत्य नैवेद्यादि निवेदयेत्॥ ३३॥ षोडशोपचारांश्च कुर्याद् गन्धाक्षतैः सह। स्तूपहिर्म्यै मूर्ध्नस्तु हंसपादः स्थितो भवेत्॥ ३४॥ नमस्ते कर्तृराज्यादि ग्रामं रक्षतु सर्वदा। सुधागुलोदकं चापि इष्टकैर्बदुभिस्ततः॥ ३५॥

तूपिकीलं दृढीकृत्य पश्चात् प्रागुक्तवत् करु। ब्रह्मा विष्णु महेश्वरस्य स्तूपिप्रतिष्ठां कुरु॥ ३६॥ कुर्वन्तद्यजमानगृहे नृपालये भुक्तिं मुक्तिमावहेत्। यस्मादकुर्वन्नारदनरनृपतयोः कर्ताश्च पीडा भवेत्॥ ३७॥ तस्मात् सर्वसुखदं नृपगृहे कुर्यात्स देवाकये। विप्रवाहनयुतं च सद्गुरुं शिल्पिनान्दि गजवाजनस्तथा॥ ३८॥ नृत्तगीत सह सर्वघोषणैः सेवितानि स्वगृहंप्रवेशयेत्॥ ३९॥ **श्लोकसंख्या १४८॥**

## ॥ अथ नयनोन्मोक्षण विधिः॥ ७२॥

**ऋषि मानसारोवाच॥** देवानामपि देवीनां भक्तानां नेत्रमोक्षणं। लिङ्गानां लक्षणोद्धारं वस्त्वादीनां यथाक्रमं॥ १॥ स्थपतिः प्रकृतिः प्रोक्तः स्थापको जीवमिष्यते। तस्मात् क्रियारम्भतः सह कुर्यात्तु संसदा॥ २॥ अकृवा नयनोन्मोक्षं चक्षुरोगो भवेद् ध्रुवं। तस्मात्तु नयनोन्मोक्ष लक्षणं वक्षयतेऽधुना॥ ६॥ हर्म्ये वा मण्डमे वा अपि स्थपति स्थापकावुभौ। स्थापनात् पूर्वके कुर्यादुक्तवदङ्कयरार्पणं॥ ७॥ पश्चात्तु सुमुहूर्ते च कुर्यान्नयनमोक्षणं। प्रासादाभिमुखे चैव चोत्तरे वाथ दक्षिणे॥ ८॥ नयनोन्मीलनं यागमण्डपं कल्पयेत्सुधीः। नवहअतं सप्तहस्तं पंचहस्तमथाभि वा॥ ९॥ चतुरश्रसमााकरं षोडशस्तंभमेव च। द्वादशस्तंभमेव वा कूटं वाथ प्रपाङ्गकं॥ १०॥ चतुर्दिक्षी चतुद्वारं चतुस्तोरणसंयुतं। तन्मण्डपस्य मध्ये तु वेदिं कुर्यात्तु चोक्तवत्॥ ११॥ तदग्रे च अग्निकुण्डं स्याद् गेमयालेपनं भवेत्। विधान ध्वज संयुक्तं नाना वस्त्रेण संयुतं॥ १२॥ पादानां समलङ्कृत्य कदली फलैर्युतं। परितश्चोर्ध्वदिशे तु रम्भामाल्यैरलङ्कृतं॥ १३॥ पुष्पमाल्यैरलङ्कृत्यः रत्नैः सर्वैरलङ्कृतं। पश्चात्तु शिल्पिभिः प्राज्ञाः कुर्यात् नयनमोक्षणं॥ १४॥ वेदिका पश्चिमे वाथ दक्षिणे वाथ नैरृते। कल्पयेत् स्थण्डिलं वाथ दारु पीठमथापि वा॥ १५॥ तदूर्ध्वे स्थापयेत् बिम्बं सकूर्चाद्यैरकङ्कृतं। तत् पूर्वे शुद्धमाल्येन स्थण्डिकं मण्डलं न्यसेत्॥ १६॥ तदूर्ध्वे स्थापयेद्धेमपात्रे नैरृत्य पूरितं। क्षौमेणाच्छादनं कुर्यादन्तः कूर्चरलंकृतं॥ १७॥ वेदीकोपरि शाल्येन कुर्यान्मण्डकं बुधः। पंचविंशत्पदं वाथ कल्पयेत् पीठमेव वा॥ १८॥ दर्भैरास्तीर्य पश्चात्तु शुद्धतण्डुलरेखया। नाना पुष्पैश्च लाजैश्च प्रोक्षयेच्छोभ नार्थकं॥ १९॥ नवकुम्भे नवैर्वापि पंचविंशतिरेव वा। विधिवत् क्षालयेत् सर्वसूत्रैरावेष्टनं भवेत्॥ २०॥ शुद्धतोयेन संपूर्य वेदिकोपरि विन्यसेत्। मध्ये प्रधानकुम्भः स्यादन्ये क्रमात् समन्ततः॥ २१॥ सर्ववस्त्रैश्च सम्वेष्टय सकूर्चाद्य प्रपल्लवान्। सविधानफलं चैवं पुष्पमाल्यैरलंकृतं॥ २२॥ उपवेद्युपरि स्थाप्य चोक्तवच्चाष्टमंगकं। पश्चात् तु शिल्पिभिः प्राज्ञैः पाद प्रक्षालनं कुरु॥ २३॥ विध्युक्त

आचमनं कुर्यात् सकलीकरणं क्रमात्। पुण्याहं वाचयित्वा तु प्रोक्षयेत्प्रतिमादिकं॥ २४॥ ब्राह्मादीनां च देवानां तत्तत् स्वनाम मन्त्रकैः। प्रणवादि नमोऽन्तेन क्रमाद् आराधयेत् पुनः॥ २५॥ धूप दीपं ददेत् प्राज्ञो मध्यकुंभस्य मध्यमे। आराध्य गन्धपुष्पैश्च भुवानादिपतिं जपेत्॥ २६॥ घृतगुलशस्यदधि क्षीरान्नं वा निवेदयेत्। धूपदीपं ददेत्तांबुलादि निवेदयेत्॥ २७॥ दर्शयेत् धेनुमुद्रादीन् गीतादीन् नृत्तघोषणैः। तदग्रे स्थपतिः प्राज्ञो होमं कुर्यात्ततः क्रमात्॥ २८॥ समिदाज्यचरुं लाज प्रत्येकमष्टोत्तर शताहुतिः। शुद्धतोयेन सङ्ख्या पंचविंशतिरेव वा॥ २९॥ हृल्लेखं बीजं मुच्चार्य स्वाहान्तं प्रणवान्तकं। बिम्बं गायत्रि मन्त्रेण पूर्णाहुतिं च कारयत्॥ ३०॥ अग्निकार्यावसाने तु विधिवद् बिम्बमाश्रयेत्। पुण्याहं वाचयित्वा पूर्णाहुतिं च कारयेत्॥ ३१॥ रत्नशुद्धिं ततः कुर्याद् गन्धपुष्पैरवार्चयेत्। स्थपतिः प्रोक्षयेद् बिम्बं सर्वमङ्गलघोषणैः॥ ३२॥ धूपदीपं दधेत् पश्चात् बिम्ब गायत्री मन्त्रतः। आराध्यत गन्धपुष्पैश्च धेनुमुद्रां प्रदर्शयेत्॥ ३३॥ अक्षिरेखा समालिख्य सव्येऽक्षि कृष्णमण्डं। ज्योतिर्मण्डकं ध्यात्वा सौरमन्त्रं समुच्चरेत्॥ ३५॥ पश्चात् तु वामनेत्रे तु शशि मन्त्रं समुच्चरेत्। ललाटे लोचनं लेख्य अग्निबीजं समुच्चरेत्॥ ३६॥ पश्चात् तु स्वर्णलिप्येन पयसाज्येन लेपयेत्। ततः प्रच्छाडनं कुर्याद्वत्सांगकनकैः सह॥ ३७॥ पायसं धनधान्यदिराशिं दर्शयेत् पुनः। स्थपतिर्वरवेषाढ्यः प्राप्तपंचांगभूषणः॥ ३८॥ श्वेतानुलेपनं लिप्यं नववस्त्रोत्तरीयवान्। स्वर्णयज्ञोवीतश्च शितपुष्पशिवा शुचिः॥ ३९॥ स्वमूर्तिसव्यं चास्ये व मूलकुम्भं तथोत्तरे। अन्यकुम्भानि सर्वाणि धारयेत् परिचारकैः॥ ४०॥ छत्रचामरसंयुक्तं सर्वमङ्गलघोषणैः। हर्म्यं प्रदक्षिणं कुर्यात् स्वाध्याय घोषणैः सह॥ ४१॥ तद्बिम्बं च समाश्रित्य सजलेनाभिषेचयेत्। अन्येन सर्वकुम्भानां जलेनोपाङ्गादि पूजयेत्॥ ४२॥ एवं कुम्भान्परिक्षिप्य तत्तत् सूत्रं समुच्चरेत्। नाना वस्त्रेण संयुक्तं नाना पुष्पैरलंकृतं॥ ४३॥ गन्धानुलेपनालिप्य सर्वाभरणभूषितं। धूपदीपं ददेत् पश्चात् गीतादि घोषणैः॥ ४४॥ मूर्धादि प्राणपर्यन्तं मातृकाक्षरं न्यसेत्। पादादि मूर्धपर्यन्तं पर्यायादि साक्षरं न्यसेत्॥ ४५॥ अष्टत्रिंशत् कलाः सर्वे तत्तदङ्गानि विन्यसेत्। अङ्गपादैः करैर्वक्त्रं करणानि च विन्यसेत्॥ ४६॥ पश्चात् तु मूलमन्त्रेण समध्यान परायणं। आराध्य गन्धपुष्पैश्च धूपदीपं दधेत्पुनः॥ ४७॥ पश्चात्तु ताम्बुलादीनि नैवेद्यानि निवेदयेत्। ब्राह्मणैश्चाक्षतैः प्रोक्षय कुर्यात्तु स्वस्तिघोषणैः॥४८॥ नृत्तीतादिमुद्रैश्च दर्शयेच्छिल्पि वित्तमः। नयनोन्मीलनं प्रोक्तं पश्चाद् ग्रामग्रदक्षिणं॥ ४९॥ लक्षणेद्धारमेवोक्तवद् रेखया लिखेत्। प्रतिमां लोहजं प्रोक्तं तथा रत्नं तु विन्यसेत्॥ ५०॥ शिलालिङ्गं तु बिम्बानां यत्तत् कर्मावसानके। स्थापनात् पूर्वके रत्नं विन्यासं कारयेत् बुधः॥ ५१॥ पीठं तस्य च

मध्ये तु नवकोष्ठं प्रकल्पयेत्। पद्मरागं तु तन्मध्ये वज्रं च इन्द्रवत् न्यसेत्॥ ५२॥ प्रवालं च अग्निकोष्ठं तु महानीलं यमे तथा। वैदूर्यं न्यसेन् नैर्ऋत्ये मरकतं पश्चिमे तथा॥ ५३॥ वायव्ये पुष्परागं च मौक्तिकं तु कुबेरके। इन्द्रनीलं तु ईशाणं तु विन्यसेत् विधिवित्तमः॥ ५४॥ स्थपतिः स्थापकश्चोभौ स्थापयेद् बिम्बलिङ्गकं। एवं तु रत्नविन्यासं शेषमङ्गं यथोक्तवत्॥ ५५॥ हृदयकमलमध्ये दीपवत्तत्परं स्यात्। कलमजहरिहरादि देवानां च सर्वं॥ ५६॥ विधिमिह सकलरूपं च चक्षुरुन्मीलनं च। कृतिमिति रखिलमुक्तं मानसारं पुराणैः॥ ५७॥ पितामहेन्द्र प्रमुखैः समस्तैः दैवैरिदं शास्त्रवरं पुरोदितं। तस्मात्समुद्धृत्य हि मानसारं शास्त्रं कृतं लोकहितार्थमेतत्॥ ५८॥

**श्लोकसंख्या २०६॥**

தேவாலங்களை ஸ்ருஷ்டி செய்யும் பொழுது விஶ்வகர்மாவை தியானம் செய்து அர்ச்சனை முதலில் செய்யது பூஜிக்க வேண்டும். படைத்தல் காத்தல் மற்றும் அழித்தல் ஆகிய தொழிகளை இவ்வுலகத்தில் செய்பவராகிய இவரை பூஜிக்காமல் எந்த படைப்புகளும் நிறைவேறா. சிற்பதிற்கு முறைப்படி கண்திறத்தலை செய்யவில்லை என்றால் அச்சிற்பத்திற்கு சக்ஷுரோகம் ஏற்பட்டு விடும். ஆகையால் நயநோந்மோக்ஷ லக்ஷணத்தினை முறைப்படி கூறுகின்றேன். தொழில்கூடத்தில் அல்லது மண்டபத்திலோ ஸ்தபதி இவற்றைச் செய்ய வேண்டும். இவற்றை செய்வதற்கு முன்பு அங்குரார்பணம் அவ்விடத்தில் செய்துக் கொள்ளவேண்டும். இதன் பின்னர் நல்ல முகூர்த்தில் நயநோந்மோக்ஷத்தினை செய்ய வேண்டும். பிரஸாதத்தின் வலது மற்றும் இடப்புறம் இவற்றினை செய்வதற்கான இடம் ஆகும். நயநோந்மீலநத்திற்காக ஓர் சிறந்த யாகமண்டபத்தினை சிற்ப சாஸ்த்திர நியமப்படி அமைத்துகொள்ள வேண்டும். முறையே 9 அல்லது 7 அல்லது 5 முழம் அளவுகள் உடையாதா அதன் விஸ்தாரம் இருக்கவேண்டும். இதன் நாற்புறங்களும் ஒரே அளவுடன் சதுரமயமாக இருக்கவேண்டும் அதிலுள்ள (ஸ்தம்பங்கள்) பந்தக்கால்கள் முறையே 16 அல்லது 12 உடையதாகக் கூடத்தில் இருக்க வேண்டும். நான்குபகுதிகளிலும் நான்குவழிகள் உடையதாகவும் தோரணங்களுடன் அமைக்க வேண்டும். அப்படிப்பட்ட அந்த மண்டபத்தின் நடுவில் பெரிய திட்டாணியை அதாவது வேதியை அதன் யுக்தியுடன் (பத்மம், ஸர்பங்கள், ஹஸ்திகள் மற்றும் கூர்மத்துடன்) கல்பிக்க வேண்டும். இதன் முன்னர் அக்னிகுண்டத்தினை உருவாக்கி அதனை கோமயத்தினால் மொலுக்கி கோலமிட்டு அலங்கரித்து வைத்துக் கொள்ள வேண்டும். இதன் மேற்கூறையின் உச்சியில் அத்தேவர்களுக்கான சித்ரங்களுடன் கூடியக் கொடி பறக்கவிட வேண்டும் (றுபுதேவனுக்கு மகரக்கொடி) மற்றும் பலவித நிற அலங்கார துணிகளால் அழகுபடுத்தி இருக்க வேண்டும். மேலும் ரத்தினங்கள் மற்றும் வாசனை மிகுந்த பூக்களால் அலங்கரிக்கப்பட்டு இருக்க வேண்டும். அப்படிப்பட்ட மண்டபத்தில் சிற்பிகளுடன் முறையாக கண்திறத்தலை ஆசார்யர் செய்ய வேண்டும். கண்திறக்க வேண்டிய யாகமண்டபத்தில் மேற்காகவோ தெற்காகவோ அல்லது நிர்ருதி மூலையாகவோ சிற்பத்திற்கு அக்ஷிமோக்ஷணம் செய்வதற்கான ஆதாரமானது தேவர்களுக்கு உகந்த மரத்திலோ அல்லது தரையில் ஸ்தண்டிலமாகவோ அல்லது நெற்கொண்டியோ ஓர் அழகான பீடம் அமைத்து அதன் மீது வைத்துக் கொள்ள வேண்டும். அதில் மேற்நோக்கியவாறு சிற்பத்தினை வைத்து அதில் தர்பை கூர்சங்களைக் கொண்டு அலங்கரிக்க வேண்டும். அதற்கு வெண்ணிற பூமாலைகளை அணிவிக்க வேண்டும். விதிப்படி ஆசார்யர் சவரம் செய்துக்கொண்டு குடும்மி வைத்தவராக வெளுப்பான சந்தனம் வைத்துக்கொண்டு

மோதிரம் கங்கணம் அணிந்து வேதோக்தமாக ஆசமனம் செய்து காயத்ரீ ஜபம் செய்ய வேண்டும். பின்னர் வேததோக்தமான புண்யாஹ வாசக மந்திரங்களை சொல்லி அந்த புனித நீரினால் அச்சிற்பத்தினின் மேல் தெளிக்க வேண்டும். ப்ரஹ்மணாதி தேவர்களுக்கு சொல்லப்பட்ட தத்தம் வேத மந்திரங்களை சொல்ல வேண்டும். அத்தேவர்களுடைய பெயர்களை சொல்லி பின்னர் நமோ என்ற சொல்லுடன் அவர்களை 1008 அல்லது 108 (அ) 27 முறை அர்ச்சித்து ஆராதனை செய்ய வேண்டும். முறையே 25 அல்லது 9 குடங்கள் வைத்து பூஜிக்க அவற்றில் மூலதேவனை மட்டும் நடுவிலுள்ள கலசத்தினால் ஆவாஹனம் செய்து கொள்ளவேண்டும். (நடுவில் றுபுதேவன், கிழக்கில் இந்திரன், அக்நேயத்தில் ஆங்கிரஸர், தெற்கில் த்வஷ்டா, நைர்றுதியில் ஸுதன்வநன், மேற்கில் வருணன், வாயுதிக்கில் விப்வான், வடக்கில் அஸ்விநௌ, ஈசானத்தில் வாஜன் முதலாக 9 தேவர்கள் மேலும் ஈசாநகோணதிகளில் ஈசானம், ஸம்வத்ஸரம், ஸத்யோஜாதம், ஆதித்யம், வைஸ்வாநரன், பரமேஷ்டீ, வாமதேவன், தக்ஷா, க்ஷேத்ரபதி, மனு, அகோரன், விஷ்ணு, பிரஜாபதி, ஸோமன், தத்புருஷன், பிருஹஸ்பதி மொத்தம்: 25 தேவர்கள்)

## २५ कुम्भानि प्रतिष्ठा विधि ॥

| निरृते क्षेत्रपतिं | मनुं | पश्चिमे अघोरं | विष्णुं | वायुः प्रजापतिं |
|---|---|---|---|---|
| दक्षं | सुधन्वनं | वरुणं | विभ्वं | सोमं |
| दक्षिणे वामदेवं | त्वष्ट्रं | ऋभुदेवं | अश्विनौ | उत्तरं तत्पुरुषं |
| परमेष्ठीं | आंगिरसं | इन्द्रं | वाजं | बृहस्पतिं |
| आग्नेये वैश्वानरं | आदित्यं | पूर्वेदिग् सद्योजातं | सविता | ईशाने ईश्वरं |

அதில் பஞ்ச இரத்தினங்களையும் பஞ்ச உலோகத்தினையும் வாசனை திரவியங்களையும் விஸ்வகர்ம மந்திரம் சொல்லி சேர்க்க வேண்டும். அக்கலசத்தில் பிரதிஷ்டை செய்ய வேண்டிய தேவனை ஆவாஹனம் செய்துக் கொள்ள வேண்டும். பின்னர் அக்கலசத்திற்கு தூபம், தீபம் முதலிய உபசாரங்களை செய்ய வேண்டும். மேலும் சந்தனம் பூக்கள் ஆகியவைகளால் விஶ்கர்மாவை அவருடைய மந்திரங்கைளைச் சொல்லி பொன்னூசினை பூஜிக்க வேண்டும். நெய்வேத்தியத்திற்காக நெய்பொங்கல், சக்கரைபொங்கல் தயிர்சோறு அல்லது பால்பொங்கல் ஏதெனினும் ஒன்றினை படையலிட வேண்டும். அங்கு தேங்காய் உடைத்து தூப தீபாராதனை செய்து வெற்றி தாம்பூலம் தக்ஷிணைத் தரவேண்டும். அக்கலசத்திற்கும் பிம்பத்திற்கும் தேனுமுத்திராதிகளைக் காண்பிக்க வேண்டும். அப்பொழுது நிருத்தகீத வாத்தியங்கள் முழுங்க வேண்டும். பின்னர் ஆசார்யர் அம்மண்டபத்தில் முறைப்படி ஹோமம் செய்வதற்கான வேலையை செய்ய வேண்டும். ஸமித்து, நெய், சரு, நெற்பொறிகள் முதலியவைகளைக் கொண்டு 108 முறை ஆஹுதி தரவேண்டும். 25 கலசங்களில் தூய்மையான நீரினை வைத்து பூஜிக்க வேண்டும். ஓங்காரத்துடன் அக்கடவுளுக்கான பீஜங்களை சேர்த்து வேதமந்திரங்களுடன் ஸ்வாஹா என்று சொல்லி ஹோமம் செய்ய வேண்டும்.

பிம்பத்திற்கு பூர்ணாஹுதியை தத்தம் காயத்திரீ மந்திரதினைச் சொல்லி தரவேண்டும். பின்னர் சக்ஷுஷே ஸூக்தத்தினை அல்லது ஸூர்ய, ஶஶி மற்றும் அக்னி மந்திரங்களை தத்தம் பீஜங்களை சொல்லியவாறு பொனூசியினால் கண் திறத்தலை செய்ய வேண்டும். கண்திறக்கும் போது முதலில் ஆசார்யரையும் சிற்பிகளையும் பார்க்க வேண்டும். பின்னர் தானதான்யகளையும் பசுவினையும் அஷ்ட மங்கலங்களையும் காண்பிக்க வேண்டும். இதன் பின்னர் யஜமானனையும் சுமங்கலீகளையும் தேவதா பக்தர்களையும் காண்பிக்க வேண்டும். பின்னர் பந்தனம் செய்வதற்காக பந்தன திரவியங்களை கொண்டு தேவனை அப்பீடத்தில் நிலைநிறுத்தி வைக்க வேண்டும்.

## ॥ अथ पंचलोह विन्यास विधि ॥ ७३ ॥

**ऋषि मानसारोवाच** ॥ नवरत्नानि लोहैश्च तत्तन्मन्त्रेण चार्चयेत्। त्रित्रिकोष्ठे तु तद्गर्भे तन्मध्ये स्वर्ण निविक्षिपेत्॥ इन्द्रे ताम्रं विनिक्षिप्य याम्ये निक्षिप्य चायसं। पश्चिमेऽत्र प्रविप्रवालं न्यस्य चोत्तरे रजतं क्षिपेत्॥ ஒன்பது குழிகளில் நடுக்குழியில் சொக்கதங்கத்தையும், கிழக்குக்குழியில் தூயசெம்பினையும், தெற்குக்குழியில் தூயஇரும்பினையும், மேற்குக்ககுழியில் வெண்கலத்தினையும், வடக்குக்குழியில் தூயவெள்ளியையும் வைக்க வேண்டும். இதுவே பஞ்சலோகத்தை வைக்கும் விதி ஆகும். இந்த பஞ்ச உலோகத்திற்கு பஞ்ச பிரம்மாக்களின் மந்திரத்தினை சொல்லி வைக்க வேண்டும்.

## ॥ अथ नवरत्न विन्यास विधि ॥ ७४ ॥

**ऋषि मानसारोवाच** ॥ स्थापनात् पूर्वके रत्नं विन्यासं कारयेत् बुधः ॥ पीठं तस्य च मध्ये तु नवकोष्ठं प्रकल्पयेत्। पद्मरागं तु तन्मध्ये वज्रं च इन्द्रवत् न्यसेत्॥ प्रवालं च अग्निकोष्ठं तु महानीलं यमे तथा। वैदूर्यं न्यसेन् नैर्ऋत्ये मरकतं पश्चिमे तथा॥ वायव्ये पुष्परागं च मौक्तिकं तु कुबेरके। इन्द्रनीलं तु ईशाणं तु विन्यसेत् विधिवित्तमः॥ रत्नशुद्धिं ततः कुर्याद् गन्धपुष्पैरवार्चयेत्। स्थपतिः प्रोक्षयेद् बिम्बं सर्वमङ्गलघोषणैः॥ धूपदीपं दधेत् पश्चात् बिम्ब गायत्री मन्त्रतः। आराध्यत गन्धपुष्पैश्च धेनुमुद्रां प्रदर्शयेत्॥ தேவர்களை பிரதிஷ்டை செய்வதற்கு முன்னர் இரத்தினத்தினை அவ்விடத்தில் அறிவுடன் வைக்க வேண்டும். கடவுளை வைக்க வேண்டிய ஆதார பீடத்தில் நடுமயமாக ஒன்பது குழிகள் அமைத்து கொள்ள வேண்டும். அதன் நடு குழியில் பத்மராகத்தினையும் கிழக்கில் வைரத்தினையும் பதிக்க வேண்டும். அக்நிகுழியில் பவளத்தினையும் தெற்கில் மஹாநீலத்தினையும் பதிக்க வேண்டும். வைடூரியத்தினை நிர்ருதியிலும் மரகதத்தினை மேற்கிலும் பதிக்க வேண்டும். வாயுமூலையிலுள்ள குழியில் புஷ்பராகத்தினையும் வடக்கில் முத்தினையும் பதிக்க வேண்டும். ஈஶாநத்தில் இறுதியாக இந்திரநீலத்தினை விதிப்படி பதிபிக்க வேண்டும். இவ்விதம் இரத்தினங்களை ஒன்பது குழிகளில் பதிப்பிக்க வேண்டும். பின்னர் இந்த இரத்தினங்களை சுத்தி செய்ய வேண்டும். அங்கு சந்தனம் அகில் புனுகு சேர்த்து பூக்களால் தத்தம் தேவர்களை அக்குழியில் அர்ச்சனை செய்ய வேண்டும். (முறையே நடுவில் வைக்கும் பொழுது பிரம்ம

ஸூக்கதத்தினையும் இந்திராதி திக்குகளுக்கு அவர்களுடைய ஸூக்தங்களை சொல்லவும்) அந்த பீடத்தில் சிற்பத்தினை பந்தனம் செய்வித்து ஸர்வமங்கலகோஷணையுடன் ஆசார்யர் கலசதீர்தத்தினால் மஹாபிஷேகம் பிம்பத்திற்கும் மற்றுமுள்ளவைகளுக்கும் செய்ய வேண்டும். பின்னர் தூபம் தீபம் மற்றும் தேனுமுத்திராதிகளைக் காட்டி அனைத்து உபசாரங்களையும் காயத்திரீ மந்திரங்களை சொல்லி செய்ய வேண்டும். இறுதியாக மஹா சாந்தியை சொல்ல வேண்டும். இவ்வாறாக முறைப்படி ஆதிபிரம்ம குலத்திலுதித்த ஆச்சாரியர்கள் தேவர்களை பக்கதியுடன் பிரதிஷ்டையை (றுக்வேதமார்கமாக இங்கு கொடுக்கப்பட்டுள்ளது) செய்ய வேண்டும் சாஸ்திரங்களில் தேவர்களாலும் றுஷிகளாலும் சொல்லப்பட்டுள்ளது.

## अथ पुण्याहवाच विधिः ॥ ७५ ॥

புண்யாகம் ஸ்வஸ்தி றுத்திம் இவைகளை முறைப்படி வாசிக்க வேண்டும். புண்யாஹ கலசத்தில் நூல் சுற்றி அழங்கரிக்க மந்திரம்.

**ऋषिः असितः काश्यपः छन्दः गायत्रीः देवता तन्तुः ॥**

तन्तुं- तन्वानमुत्तममनु प्रवत आशत । उतेदमुत्तमाय्यं- ॥ १ ॥

त्वं सोम पणिभ्य आ वसु गव्यानि धारयः । ततं तन्तुमचिक्रदः ॥ २ ॥

**றுஷி: அஸித: காஶ்யப: சந்த: காயத்ரீ: தேவதா தந்து:**
தந்ததும் தந்வாநமுத்தமமநு ப்ரவத ஆஶத,
உதேதமுத்தமாய்யம்.
த்வம் ஸோம பணிப்ய ஆ வஸு கவ்யாநி தாரய:
ததம் தந்துமசிக்ரத:

கும்பத்தினை ப்ரதிஷ்டை செய்விக்கும் போது சொல்லும் மந்திரம்.

**ऋषिः विश्वेदेवाः सौवीकाग्निर्वा छन्दः जगतीः देवता पुण्याहपात्रं ॥**

त्वष्टा माया वे-दपसामपस्तमो बिभ्रत् पात्रा देवपानानि शंतमा ।

शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः ॥ ३ ॥

**றுஷி: விஶ்வேதேவ: ஸௌவீகாக்நீர்வா சந்த: ஜகதீ: தேவதா புண்யாஹபாத்ர:**
த்வஷ்டா மாயா வே தபஸாமபஸ்தமோ பிப்ரத் பாத்ரா தேவபாநாநி ஶம்தமா,
ஶிஶீதே நூநம் பரஶும் ஸ்வாயஸம் யேந வ்றுஶ்சாதேதஶோ ப்ரஹ்மணஸ்பதி:

புண்யாஹ கலஶத்தில் புண்ணிய தீர்தங்களை ஊற்றிட மந்திரங்கள்.

**ऋषिः सिन्धुक्षिद् प्रियमेधः छन्दः जगतीः देवता नद्या ॥**

इमं मे- गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं- सचता परुष्ण्या ।

असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ४ ॥

றுஷி: ஸிந்துக்ஷித் ப்ரியமேத: சந்த: ஜகதீ: தேவதா நத்யா,

இமம் மே கங்கே யமுநே ஸரஸ்வதீ ஶுதுத்ரி ஸ்தோமமம் ஸசதா பருஷ்ண்யா,
ஆஸிக்ந்யா மருத்வ்றுதே விதஸ்தயார் ஜீகீயே ஶ்றுணுஹ்யா ஸுஷோமயா.

கரகத்தில் உலோகங்கள், இரத்தினங்கள் மற்றும் கூர்சத்தினை வைக்க மந்திரம்.

**ऋषिः सुमित्रः वाध्र्यश्वः छन्दः त्रिष्टुप् देवता रत्नलोहौ ॥**

देव त्वष्टर्यद्ध चारुत्वमानड्यदङ्गिरसामभवः सचाभूः ।

स देवानां पाथ उप प्र विद्वाँ उशन्यक्षि द्रविणोद ः सुरत्नः ॥ ५ ॥

**றுஷி: ஸுமித்ர: பாத்ர்யஶ்வ: சந்த: த்ரிஷ்டுப் தேவதா ரத்நலோஹௌ**
தேவ த்வஷ்டர் யத்த சாருத்வமாநட்யங்கிரஸாமபவ: ஸசாபூ:,
ஸ தேவாநாம் பாத உப ப்ர வித்வாகும் உஶந்யக்ஷி த்ரவியோத: ஸுரத்ந:

பின்னர் புண்யாஹகரகத்தில் தேங்காய் வைக்க மந்திரம்.

**ऋषिः वामदेवः गौथूम च छन्दः गायत्रीः देवता नाळिकेरं ॥**

कया नश्चित्र आभुवदूती सदावृधः सखा ।

कया शचिष्ठया वृता ॥ ६ ॥

**றுஷி: வாமதேவ: கோதம: சந்த: தேவதா நாளிகேர:**
கயா நஶ்சித்ர ஆபுவதூதீ ஸதாவ்றுத: ஸகா,
கயா ஶசிஷ்டயா வ்றுதா.

அதற்கு சந்தனம் குங்குமம் இட்டு மாவிலைகள் வைக்க மந்திரங்கள்.

**ऋषिः आनन्दः कर्दमं चिक्लीतः छन्दः पङ्क्तिः देवता गन्धः ॥**

गन्धद्वारां दुराधर्षां नित्य पुष्टां करीषिणीम् ।

ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ७ ॥

**றுஷி: ஆநந்த: கர்த்தம: சிக்லீத: சந்த: பங்க்தி: தேவதா கந்த:**
கந்தத்வாராகும் துராதர்ஷாம் நித்ய புஷ்டாம் கரீஷிணீம்,
ஈஶ்வரீகும் ஸர்வபூதாநாகும் தாமிஹோபஹ்வயே ஶ்ரீயம்.

பூக்களால் அழங்கரித்து தேவதா நாமங்களால் அர்ச்சிக்க வேண்டும். புண்யாக கலசத்திற்கு தூபம் தீபம் நைவேத்யம் காட்டி பூஜிக்க வேண்டும். புண்யாஹ வாசக மந்திரங்களை யஜமானும் ஆசார்யரும் சொல்ல வேண்டும்.

**ऋषिः अग्निवेश्यः भरद्वाजः छन्दः सर्वछन्दांसिः देवता प्रजापतिः ॥**

ॐ पुण्याहं वाचयिष्ये । ॐ वाच्यतां ॥ ८ ॥

ॐ आपः । ॐशिवा आपः सन्तु ॥ ९ ॥

ॐ गन्धाः । ॐ सुगन्धाः पान्तु ॥ १० ॥

ॐ सुमनसः । ॐ सौमनस्यमस्तु ॥ ११ ॥

ॐ शिवं कर्माः। ॐ आपः स्वस्ति शिवं कर्मा अस्तुः ॥ १२ ॥

ॐ अन्वाहार्यः। ॐ सुमन्वाहार्योऽस्तु ॥ १३ ॥

ॐ दक्षिणाः। ॐ स्वस्ति दक्षिणाः पान्तु बहु देयं अस्तु ॥ १४ ॥

ॐ अक्षतं। ॐ अक्षतं चारिष्टं चास्तु ॥ १५ ॥

ॐ मनः समाधीयतां। ॐ समाहित मनसः स्मः ॥ १६ ॥

ॐ प्रसीदन्तु भवन्तु। ॐ प्रसन्नाः स्मः पुण्याह काले वाच्यतां ॥ १७ ॥

ॐ शान्तिरस्तु। पुष्टिरस्तु। तुष्टिरस्तु। ऋद्धिरस्तु। वृद्धिरस्तु। अविघ्नमस्तु।

आयुष्यमस्तु। आरेग्यमस्तु। धन धान्य समृद्धिरस्तु। शिवं कर्मा अस्तु ॥ १८ ॥

ॐ प्रजापतिः प्रीयतां। ॐ प्रीयतां भगवान् प्रजापतिः ॥ १९ ॥

ॐ पुण्याहं भवन्तो ब्रुवन्तु। ॐ पुण्याहं ॥ २० ॥

ॐ स्वस्ति भवन्तु ब्रुवन्तु । ॐ स्वस्तिं ॥ २१ ॥

ॐ ऋद्धिं भवन्तो ब्रुवन्तु। ॐ ऋद्ध्यतां ॥ २२ ॥

ॐ पुण्याह समृद्धिः अस्तु ॥ २३ ॥ ॐ शिवं कर्मा अस्तुः ॥ २४ ॥

ॐ पितरः प्रीयन्तां। ॐ पितरः ॥ २५ ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ **मन्त्रसंख्या २९६**

**றுஷி: அக்நிவேச்ய: பரத்வாஜ: சந்த: ஸர்வசந்தாகும்ஸி தேவதா ப்ரஜாபதி:**

(யஜமானன்) (ஆசார்யர்கள் சொல்லவும்)

ஓம் புண்யாஹம் வாசயிஷ்யே ஓம் வாச்யதாம்

ஓம் ஆப: ஓம் ஶிவா ஆப: ஸந்து,

ஓம் கந்தா: ஓம் ஸுகந்தா: பாந்து,

ஓம் ஸுமநஸ: ஓம் ஸௌமநஸ்யமஸ்து,

ஓம் ஶிவம் கர்மா: ஓம் ஆப: ஸ்வஸ்தி ஶிவம் கர்மா அஸ்து,

ஓம் அந்வாஹார்ய: ஓம் ஸுமந்வார்யோ அஸ்து,

ஓம் தக்ஷிணா: ஓம் ஸ்வஸ்தி தக்ஷிணா: பாந்து பஹு தேயம் அஸ்து,

ஓம் அக்ஷதம் ஓம் அக்ஷதம் ச அரிஷ்டம் ச அஸ்து,

ஓம் மந: ஸமாதீயதாம் ஓம் ஸமாஹித மநஸ: ஸ்ம:

ஓம் ப்ரஸீதந்து பவந்து ஓம் ப்ரஸந்நா: ஸ்ம: புண்யாஹ காலே வாச்யதாம்,

(ஆசார்யர்கள் சொல்லவும்)

ஓம் ஶாந்திரஸ்து, புஷ்டிரஸ்து, துஷ்டிரஸ்து, றுத்திரஸ்து, வ்றுதிரஸ்து,
அவிக்நமஸ்து, ஆயுஷ்யமஸ்து, ஆரோக்யமஸ்து,
தன தனான்ய ஸம்றுத்திரஸ்து, ஶிவம் கர்மா அஸ்து,

ஓம் ப்ரஜாபதி: ப்ரியதாம், ஓம் ப்ரியதாம் பகவான் ப்ரஜாபதி:

ஓம் புண்யாஹம் பவந்தோ ப்ருவந்து, ஓம் புண்யாஹம்,

ஓம் ஸ்வஸ்தி பவந்தோ ப்ருவந்து ஓம் ஸ்வஸ்திம்

ஓம் றுத்திம் பவந்தோ ப்ருவந்து ஓம் றுத்யதாம்,

ஓம் புண்யாஹ ஸம்றுத்தி: அஸ்து, ஓம் ஶிவம் கர்மா அஸ்து:

ஓம் பிதர: ப்ரியந்தாம் ஓம் பிதர:
ஓம் ஶாந்திஶ்ஶாந்திஶ்ஶாந்தி:

## अथ जयादि होम विधिः ॥ ७६ ॥

अथ मूले स्रुवं गृहीत्वा जपति ॥ **ऋषिः कौशिकः देवरातः छन्दः अनुष्टुप् देवता स्रुक्स्रुवौ ॥** ॐ विष्णोर्हस्तोऽसि दक्षिणः पूष्ण दत्तो बृहस्पतेः। तं त्वाहं स्रुवमाददे देवानां हव्यवाहनं॥
ஸ்ருக்ஸ்ருவங்களை ஹோமத்திற்காக கையில் பிடிக்கும் போது ஜபிக்க வேண்டிய மந்திரம். **றுஷி: கௌஶிக: தேவராத: சந்த: அநுஷ்டுப் தேவதா ஸ்ருக்ஸ்ருவௌ.** ஓம் விஷ்ணோர் ஹஸ்தோ அஸி தக்ஷிண: பூஷ்ண தத்தோ ப்ருஹஸ்பதே:, தம் த்வாஹம் ஸ்ருவமாததே தேவாநாம் ஹவ்யவாஹநம்.

**ऋषिः शांखायनः कौषीतकिः छन्दः सर्वछन्दꣳसिः देवता समृद्ध्यादि देवीः ॥**

ॐ इष्टेभ्यः स्वाहा। वषळनिष्टेभ्यः स्वाहा। भेषजाय स्वाहा। दुरिष्ट्यै स्वाहा। निष्कृत्यै- स्वाहा। दौराध्यै स्वाहा। ऋद्ध्यै- स्वाहा। समृद्ध्यै स्वाहा। देवीभ्यस्तनूभ्यः स्वाहा॥ १॥

**றுஷி: ஶாங்காயந: கௌஷீதகி: சந்த: ஸர்வசந்தாகும்ஸி: தேவதா ஸம்றுத்யாதி தேவீ:**
ஓம் இஷ்டேப்ய: ஸ்வாஹா, வஷளநிஷ்டேப்ய: ஸ்வாஹா, பேஷஜாய ஸ்வாஹா, துரிஷ்ட்யை ஸ்வாஹா, தௌரார்த்யை ஸ்வாஹா, றுத்யை ஸ்வாஹா, ஸம்றுத்யை ஸ்வாஹா, தேவீப்யஸ்தநூப்ய: ஸ்வாஹா (1-ஸம்றுத்யை ஹோமம்)

**ऋषिः वसिष्ठः वामदेवर्वा छन्दः त्रिष्टुप् देवता शत्रूञ्जयः ॥**

इन्द्रः सूरः प्रथमो विश्वकर्मा मरुत्वाꣳ अस्रु गणवान् सुजातैः। मम स्नुषा श्वशुरस्य प्रविटौ सपत्ना वाचं मनस उपासतां॥ २॥ इन्द्रः सूरो अतरद्रजाꣳसि स्नुषा सपत्नाः श्वशुरीऽहमस्मि। अहं शत्रून्जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ॥ ३॥

**றுஷி: வஸிஷ்ட: வாமதேவர்வா சந்த: த்ரிஷ்டுப் தேவதா ஶத்ரூஞ்ஜய:**
இந்த்ர: ஸூர: ப்ரதமோ விஶ்வகர்மா மருத்வாகும் அஸ்ரு கணவாந் ஸுஜாதை,
மம ஸ்நுஷா ஶ்வஶுரஸ்ய ப்ரவிடௌ ஸபத்நா வாசம் மநஸ உபாஸதாம்.
இந்த்ரோ: ஸூரோ அதரத்ரஜாகும்ஸி ஸ்நுஷா: ஶ்வஶுரீ அஹஸ்மி,
அஹம் ஶத்ரூந்ஜயாமி ஜர்ஹ்றுஷாணோ அஹம் வாஜம் ஜயாமி வாஜஸாதௌ
(2-ஶத்ருந்ஜய ஹோமம்).

**ऋषिः जयेन्द्रः सुयज्ञर्वा छन्दः जगतीः देवता जयेन्द्रः ॥**

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै-।
तयाऽनन्तं लोकमहं जयानि प्रजापतिर्यꣳ प्रथमो जिगाय॥ ४॥

**றுஷி: ஜயேந்த்ர: ஸுயஜ்ஞர்வா சந்த: ஜகதீ: தேவதா ஜயேந்த்ர:**
அம்றுதாஹுதிமம்றுதாயாம் ஜுஹோமி அக்நிம் ப்றுதிவ்யாமம்றுதஸ்ய ஜித்யை,
தயாநந்தம் லோகமஹம் ஜயாநி ப்ரஜாபதிர் யகும் ப்ரதமோ ஜிகாய (3-ஜய ஹோமம்).

**ऋषिः सुयज्ञः शांखायनः छन्दः शक्वरीः देवता मन्त्रलिङ्गोक्तः ॥**

अग्ने पृथिव्या अधिपते। ५। वायो अन्तरिक्षस्याधिपते। ६। सवितः प्रसवानामधिपते। ७। सूर्यो नक्षत्राणामधिपते। ८। सोमौषधीनामधिपते। ९। त्वष्टः समिधां रूपाणामधिपते। १०। मित्र सत्यानाधिपते। ११। वरुण धर्माणाधिपते। १२। इन्द्रो ज्येष्ठानामधिपते। १३। प्रजापते प्रजानामधिपते॥ १४॥

विश्वे-देवा विश्वे-वैश्वानरा विश्वे-विश्वमहस इह मावतास्मिन् । ब्रह्मण्यस्मिन् क्षत्रे- अस्मिन् कर्मण्यस्यामाशिष्यास्यां प्रतिष्ठायामस्यां देवहूत्यामयं मे कामः समृध्यतां स्वाहा॥

**ருஷி: ஸுயஜ்ஞ: ஶாங்காயந: சந்த: சக்வரீ: தேவதா மந்த்ரலிங்கோக்த்த:**
அக்நே ப்ருதிவ்யா அதிபதே, வாயோ அந்தரிக்ஷஸ்யாதிபதே, ஸவித: ப்ரஸவாநாமதிபதே, ஸூர்யோ நக்ஷத்ராணாமதிபதே, ஸோமௌ ஷதீநாமதிபதே, த்வஷ்ட: ஸமிதாம் ரூபாணாமதிபதே, மித்ர ஸத்யாநாமதிபதே, வருண தர்மாணாமதிபதி, இந்த்ரோ ஜ்யேஷ்டாநாமதிபதே, ப்ரஜாபதே ப்ரஜாநாமதிபதே, விஶ்வேதேவா விஶ்வே வைஶ்வாநரா விஶ்வே விஶ்வமஹஸ இஹ மாவதஸ்மிந், ப்ரஹ்மண்யஸ்மிந் க்ஷத்ரே அஸ்மிந் கர்மண்யஸ்யாமாஶிஷ்யாம் ப்ரதிஷ்டாயாமஸ்யாம் தேவஹூத்யாமயம் மே காம: ஸம்ருத்யதாம் ஸ்வாஹா
(4- அப்யாதாந ஹோமம்).

**ऋषिः तार्क्ष्यः सुपर्णः छन्दः विराट् देवता सुहस्तपतिः॥**

सौधन्वनासस्सुहस्तां शमीभिस्त्वष्टमाङ्गिरसमृभवं- स्वस्तये- ॥ १५॥

**ருஷி: தார்க்ஷ்ய: ஸுபர்ண: சந்த: விராட் தேவதா ஸுஹஸ்தபதி:**
ஸௌதந்வநாஸஸ் ஸுஹஸ்தாம் ஶமீபிஸ்
த்வஷ்டம் ஆங்கிரஸம் ருபுவம் ஸ்வஸ்தயே.
என்ற மந்திரத்தினை ஜபித்துக்கொண்டு புண்யாஹ கரகத்தினை எடுக்கவேண்டும் (5).

**ऋषिः सुयज्ञः शांखायनः छन्दः विराट् देवता आपः॥ संप्रोक्षणं**

ॐ शग्मं शग्मं शिवं शिवं क्षेमाय वः शान्त्यै प्रपद्ये- अभयं नो अस्तु॥ १६॥ **मन्त्रसंख्या ३१२**

**ருஷி: ஸுயஜ்ஞ: சாங்காயன: சந்த: விராட் தேவதா ஆப:**
ஓம் ஶக்மம் ஶக்மம் ஶிவம் ஶிவம் க்ஷேமாய வ: ஶாந்த்யை ப்ரபத்யே அபயம் நோ அஸ்து (6).
என்ற மந்திரத்தினை சொல்லியவாறு புண்யாகரத்திலுள்ள மந்திர ஜலத்தினால் ஸம்ப்ரோக்ஷணம் செய்ய வேண்டும்.

## अथ अङ्कुरार्पण विधिः॥ ७७॥

अथ मध्ये चतुर्मुखं विन्द्यात्पुर्वे वज्रिणमेव च दक्षिणे तु यम विन्द्यात्पश्चिमे वरुणं तथा उत्तरे शशिनं विन्द्यात्पालिकास्थापनं क्रमात्॥ वाल्मीक मृत्तिकां हृत्वा गोमयं च तथैव च। एतानि प्रक्षियेत्तासु पालिकासु यथाक्रमं॥

**ॐ भूः ब्रह्माणमावाहयामि ॥ ॐ भुवः प्रजापतिमावाहयामि ॥ ॐ स्वः चतुर्मुखमावाहमामि ॥**

**ॐ भूर्भुवस्स्वः हिरण्यगर्भमावाहयामि** ॥ इति मध्ये ॥ १ ॥

**ॐ भूः इन्द्रमावाहयामि ॥ ॐ भुवः वज्रिणमावाहयामि ॥ ॐ स्वः शचिपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः शतक्रतुमावाहयामि** ॥ इति पूर्वे ॥ २ ॥

**ॐ भूः यममावाहयामि ॥ ॐ भुवः वैवस्वतमावाहयामि ॥ ॐ स्वः पितृपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः धमराजमावाहयामि** ॥ इति दक्षिणे ॥ ३ ॥

**ॐ भूः प्रचेतसमावाहयामि ॥ ॐ भुवः सुरूपिणमावाहयामि ॥ ॐ स्वः अपांपतिमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः वरुणमावाहयामि** ॥ इति पश्चिमे ॥ ४ ॥

**ॐ भूः शशिनमावाहयामि ॥ ॐ भुवः निशाकरमावाहयामि ॥ ॐ स्वः चन्द्रमावाहयामि ॥**

**ॐ भूर्भुवस्स्वः सोममावाहयामि** ॥ इति उत्तरे ॥ ५ ॥

अथैतां स्नापयति **आपो हिष्ठा** इति तिसृभिः **पवमान सूक्तेन** इति गन्धपुष्पधूपदीपैरभ्यर्चयति अमुष्मै नमो अमुष्मै नमः इति ॥ **दिशाम्पतिं नमस्यामि सर्वकामफल प्रदान्। कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभं** ॥ ५ ॥ इति व्रीहि यव माष तिल मुद्ग सर्षपां मिश्रीकृत्य क्षीरेण प्रक्षाल्य **ओषधि सूक्तेन** ॥ पालिकस्मध्ये **ब्रह्म जज्ञानं प्रथमं** इति पुर्वे **इन्द्रा याहि** इति दक्षिणे **यमो नो गातुं** इति पश्चिमे **इमं मे-वरुणे** इति उत्तरे **सोमो धेनुं सोमो** इति याथक्रमं ॥ **मन्त्रसंख्या ३१७**

**அங்குரார்பண விதி:** மங்கலமான புற்று அல்லது எச்சில் படாத துய மண்ணினைக் கொண்டு பசுஞ்சாணத்துடன் கலந்து கலவையாக ஓர் பாத்திரத்தில் வைத்துக்கொள்ள வேண்டும். இப்பாத்திரம் தங்கத்திலோ வெள்ளியிலோ செம்பிலோ வெண்கலத்திலோ அல்லது மண்ணிலோ செய்யப்பட்டதாகவே இருக்க வேண்டும். இதற்கு பாலிகை என்று பெயர். இதைசுற்றி அழகாக மாவிழைகளால் கட்டப்பட்டு இருக்க வேண்டும். இதன் மத்தியில் பிரம்மாவையும் கிழக்கில் இந்திரனையும், தெற்கில் யமனையும், மேற்கில் வருணனையும், வடக்கில் ஸோமனையும் வியாஹ்ருதிகளை சொல்லி முறையாக ஆவாஹனம் செய்து கொள்ள வேண்டும். பின்னர் **ஆபோ ஹி ஷ்டாதி** மந்திரங்களையும் **பவமான ஸூக்தங்களையும்** சொல்லி அப்பாலிகையில் தீர்த்தத்தினை ஊற்ற வேண்டும். அதற்கு சந்தனம் இட்டு பூக்களால் தத்தம் நாமங்களால் அர்ச்சித்து தூபம் தீபம் காட்டி **"திசாம்பதிம் நஸஜ்யாமி ஸர்வகாமபல ப்ரதாந், குர்வந்து ஸபலம் கர்ம குர்வந்து ஸததம் சுபம்"** என்று நமஸ்கரிக்க வேண்டும். நெல், யவம், உளுந்து, எள்ளு, பாசிபயிரு, கடுகு முதலியவைகளை கலந்து அப்பாலிகையில் இட வேண்டும். விதையிடும் போது பசும்பாலினைக் கொண்டு ஊற்றி **ஓஷதீ ஸூக்தம்** சொல்லிக்கொண்டு விதைக்க வேண்டும். பின்னர் பிரம்மாவிற்கு **பிரம்ம ஜஜ்ஞானம்** என்ற மந்திரம் சொல்லி நடுவில் பூஜிக்க, கிழக்கில் **இந்திரா யாஹி** என்ற மந்திரம் சொல்லி இந்திரனை பூஜிக்க, மேற்கில் **யமோ நோ காதும்** மந்திரம் சொல்லி யமதர்மனை பூஜிக்க, மேற்கில் **இமம் மே வருணம்** என்ற மந்திரம் சொல்லி வருணதேவனை பூஜிக்க, வடக்கில் **ஸோமோ தேனு** என்ற மந்திரம் சொல்லி

